॥ ॐ श्रीगणेशायनमः ॥ ॥ दीक्षितोरणयज्ञेषुविबुधानंदंदायिषु ॥ हरिरांब्धसुतावक्र
सोमपीतीपुनातुवः ॥ १ ॥ अहोरात्राश्रितोधर्म्मइहवाजसनेयिनाम् ॥ निवध्यतेनिवद्धो
यो धर्म्मशास्त्रनिबन्धिभिः ॥ २ ॥ तत्रमनुः ॥ ॥ ब्राह्मेमुहूर्त्तेवुध्येतधर्म्मार्थौचानुचिन्तयेत्
॥ कायक्लेशांश्चतन्मूलान्वेदतत्वार्थमेवच ॥ ब्राह्मोमुहूर्त्तःसन्ध्यापूर्वदण्डद्वयात्मकः ॥ तन्मू
लान्धर्म्मार्थहेतुक्रियानिमित्तकान् वेदतत्वार्थमिति तत्वपदमपन्यायप्रतीतार्थनिवारणा
र्थं वेदतत्वार्थोब्रह्मेत्येके ॥ ब्रह्मपुराणे ॥ ब्राह्मेमुहूर्त्तेसुस्थेचमानसेमतिमान्नृप ॥ विशुद्धश्चि
न्तयेद्धर्म्ममर्थञ्चास्याविरोधिनं॥अपीडयातयोःकाममुभयोरपिचिन्तयेत् ॥अथ मूत्रपुरी
षोत्सर्गविधिः ॥ ॥ तत्रविष्णुपुराणे ॥ ततःकल्येसमुत्थायकुर्यान्मैत्रंनरेश्वरः ॥ नैर्ऋत्या
मिषुविक्षेपमतीत्याभ्यधिकम्भुवः ॥ मैत्रंपुरीषोत्सर्गः मित्रदेवताकंपायुसंबंधात् ॥ नैर्ऋ
त्यांशयनस्थानात् ॥ आपस्तम्बः ॥ मूत्रपुरीषेकुर्याद्दक्षिणांदिशंदक्षिणापरांवा॥गत्वेतिशे
षः दक्षिणापरानैर्ऋती ॥तथा ॥ अस्तमितेचबहिर्ग्रामादाराच्चावसथान्मूत्रपुरीषयोः कर्म

वर्जयेत् ॥ आराद्दूरे आवसथाद्गृहात् ॥ वायुपुराणे ॥ शुष्कैस्तृणैस्तथाकाष्ठैः पत्रैर्वेणुदले
नवा ॥ मृन्मयैर्भाजनैर्वापि अंतर्द्धायवसुंधराम् ॥ तृणैःकुशादिव्यतिरिक्तैः ॥ काष्ठैःपाला
शादिव्यतिरिक्तैः तृणमयाज्ञिकंकाष्ठमित्यापस्तंबवचनात् ॥मनुः॥ मूत्रोच्चारसमुत्सर्गंदि
वाकुर्यादुदङ्मुखः ॥ दक्षिणाभिमुखोरात्रौसंध्ययोश्चयथादिवा ॥ एवञ्चमनुनासर्वकाल
व्यापिमुखनियमविधानात् ॥ प्रत्यङ्मुखस्तुपूर्वाण्हेसायाह्नेप्राङ्मुखस्तथा ॥ उदङ्मुख
स्तुमध्याह्नेनिशायांदक्षिणामुखः ॥ इतियमवचनम् ॥ सदैवोदङ्मुखःप्रातःसायाह्नेदक्षि
णामुखः ॥ इतिदेवलवचनंचनादर्त्तव्यं ॥मन्वर्थविपरीतायास्मृतिःसानप्रशस्यते इतिबृ
हस्पतिवचनात् ॥अथवा मानवंदिवापदंप्रातर्मध्याह्नपरमितिनविरोधः ॥पुनर्म्मनुः॥ छा
यायामन्धकारेवारात्रावहनिवाद्विजः ॥ यथासुखमुखःकुर्यात्प्राणबाधाभयेषुच ॥ रात्राव
हनिवेत्युक्तेः सन्ध्यायामुदङ्मुखत्वनियमएव॥अत्रसांख्यायनगृह्यम् ॥यद्येकवस्त्रोयज्ञो
पवीतंकर्णेदत्वा द्विवस्त्रतापक्षेतु नियम्यते यतोवाचंसंवीतंसंवीतंनिवीतंअंसयोर्द्वयोर्मध्ये

यस्य आच्छादितशिरः नांसोऽवगुण्ठितइति मनुवचनान्निवीतमेवकर्त्तव्यं तच्च पृष्ठलंबि
तं निवीतमापृष्ठदेशावलंबनं ग्राम्यधर्म्मेष्विति निगमपरिशिष्टेदर्शनात् ग्राम्यधर्मोमैथु
नम् कडाराइतिवद्बहुवचनमाद्यर्थे तेनम पुरीषोत्सर्गपरिग्रहः ॥ तत्रहारीतः ॥ घ्राणा
स्यंवाससावेष्टयित्वा मृद्धात्रींकण्ठेसमा दक्षिणबाहुपार्श्वेकमण्डलुमादाय ॥ मृद्धात्रीं
मृत्तिकापात्रीं ॥ यमः ॥ शिरःप्रच्छाद्यकुर्वीतशकृन्मूत्रविसर्जनम् ॥मनुः ॥ नमूत्रंपथिकुर्वी
तनभस्मनिनगोव्रजे ॥ नफालकृष्टेनजलेनाचित्यांनचपर्वते ॥ नजीर्णदेवायतनेनवल्मीके
कदाचन ॥ नससत्वेषुगर्तेषु॥ मूत्रमितिपुरीषस्याप्युपलक्षणम्॥चितिरग्निचयस्थानंचिता
वा॥ नजीर्णदेवायतनइतिदृष्टार्थं काष्ठेष्टकादिपातसंभवात् ॥यमस्मृतौचसर्वदेवायतनइ
तिनिषेधोवक्ष्यते ससत्वेषुप्राणिमत्सु तथा ॥ ननदीतीरमासाद्यनचपर्वतमस्तके ॥ पर्वत
निषेधादेवपर्वतमस्तकनिषेधेसिद्धे पुनस्तन्निषेधोयत्रापिपर्वतोऽशक्यपरिहारस्तत्रापि
मस्तकवर्जनार्थः ॥ देवलः ॥ वापीकूपनदीगोष्ठचित्यंभःपथिभस्मसु ॥ अग्नौकाम्येश्म

शानेचविण्मूत्रंनसमाचरेत् ॥ वाप्यादिपदंजलरहितभागनिषेधार्थमम्भसः पृथगुपादा
नात्॥काम्येप्रकृष्टस्थाने ॥ अत्रचविष्णुः ॥ नोषरेनशाड्वलेनपराशुचौनोद्यानोदकसमी
पयोर्नाकाशे ॥ आकाशेऽसंवृतदेशे ॥ तदुक्तंवायुपुराणे ॥ यदाकाशःस्मृतोभीमस्तस्मा
न्नासंवृतेक्वचित् ॥ कुर्यान्मूत्रंपुरीषंवानभुंजीतापिबेन्नवेति ॥ एवञ्चाकाशेअट्टालिकादि
स्थितइतिव्याख्यानमशुद्धं ॥ अत्रयमः ॥ पल्वलानितडागानिनदीप्रस्रवणानिच ॥ नग
गोमयभस्मानिफालकृष्टानिवर्जयेत् ॥ तुषाङ्गारकपालानिदेवतायतनानिच ॥ राजमा
र्गश्मशानानिक्षेत्राणिचखलानिच ॥ उपरुद्धोनसेवेतछायांदृश्यञ्चतुष्पथं ॥उदकंचोदका
तञ्चपन्थानञ्चविवर्जयेत्॥वर्जयेद्वृक्षमूलानिचैत्यश्वभ्रबिलानिच॥उपरुद्धोवेगी पंथानमि
त्यनेनैवनिषेधेसिद्धेराजमार्गचतुष्पथयोरुपादानंदण्डधारणरूपदृष्टप्रयोजनकं॥हलायु
धनिबंधेतुसमीपलक्षणोक्ता॥ चैत्योग्रामादिप्रसिद्धिहेतुर्महावृक्षः श्वभ्रंविदीर्णभूभागः॥
हारीतः ॥ नचत्वरोपद्वारयोर्मूत्रपुरीषेकुर्यान्नतीर्थेनसस्यसंपन्नेनयज्ञियानांवृक्षाणामध

स्तात् ॥चत्वरंनानाजनावस्थानदेशःकाकादिबलिस्थानमितिकेचित्॥उपद्वारंद्वारसमीपं
तीर्थेंपुण्यदेशे जलावतरणमार्गेइत्येके॥ आपस्तम्बः॥ छायायांमूत्रपुरीषयोःकर्म्मवर्जये
त्स्वांलवमेहेत् ॥ छायायांपथिकाद्युपजीव्यच्छायायां नोपजीव्यच्छायायामितिस्मृत्यन्त
रात् ॥स्वान्लवमेंहेदिति अनुज्ञाबलाच्च पुरुषान्तरछायापिनिषिद्धा॥तथा॥नसोपानत्को
मूत्रपुरीषेकुर्यात् ॥ अत्रमनुः॥नगच्छन्वापिचस्थितइति ॥ स्थितऊर्द्ध्वः ॥शंखलिखितौ॥ ना
नंतर्वासाः कुर्यात् ॥ मूत्रपुरीषेइतिशेषः॥ गौतमः ॥ नवाय्वग्निविप्रादित्यापोदेवतागा
श्चपश्यन्मूत्रपुरीषामेध्यान्युदस्येत् ॥ देवताविष्ण्वादिप्रतिमाः अमेध्यानिश्लेष्मादीनि
॥ अत्रयाज्ञवल्क्यः ॥ नप्रत्यर्काग्निगोसोमसन्ध्याम्बुस्त्रीद्विजन्मनइति ॥ अत्रसांख्या
यनगृह्यं ॥ नादित्याभिमुखोनजघन्येनिंद्यस्थाने हन्तिमेहयतःप्रज्ञांप्रतिपंथानमेवच ॥
विष्णुपुराणे ॥ तिष्ठेन्नातिचिरंतत्र ॥ तत्रमूत्रपुरीषस्थाने ॥ हारीतः ॥ लोष्ठेनप्रमृजीत शु
ष्ककाष्ठेनवाप्रमृजीत ॥ गुदलिंगेइतिशेषः॥लोष्ठेनेतिशुष्ककाष्ठाभावे ॥ नपर्णलोष्ठाश्म

भिर्मूत्रपुरीषापकर्षणंकुर्यादिति गौतमनिषेधात् ॥ व्यासः ॥ नाश्ममूलफलांगारैरुन्मृ
जेन्नास्थिबर्हिषा ॥ आपस्तम्बः ॥ आर्द्रानोषधिवनस्पतीनाछिद्यमूत्रपुरीषयोः स्त्रंसन
कर्मवर्जयेत् ॥ अथशौचम् ॥ मनुः ॥ गृहीतशिश्नश्चोत्थायमृद्भिरभ्युद्धृतैर्जलैः ॥ गंधलेप
क्षयकरंशौचंकुर्यादतंद्रितःअतंद्रितोऽनलसः ॥ एतच्चऋष्यन्तरविहितसंख्यानुवादार्थम्
अतोगंधलेपक्षयादेवशौचं॥ संख्यादिनियमस्त्वदृष्टार्थइतिव्याख्यानमशुद्धं॥शुद्धिमभी
प्सतेतिश्रवणाच्च ॥ ब्रह्मपुराणे ॥ उद्धृतोदकमादायमृत्तिकांचैववाग्यतः ॥ उदङ्मुखोदि
वाकुर्याद्रात्रौचेद्दक्षिणामुखः ॥ मृत्तिकाग्रहणंकण्ठासक्तमृद्वात्रीतः हारीतानुसारात्॥तद
संभवेन्यतोपिकुर्यात्॥शौचमितिशेषः॥ यमः॥आहरेन्मृत्तिकांविप्रःकूलात्ससिकतांतथा
नाखूत्कृष्टान्नवल्मीकात्पांशुलान्नचकर्दमात् ॥ नमार्गान्नोखराच्चैवशौचशिष्टापरस्यया ॥
विप्रइतिशौचकर्तृमात्रोपलक्षणं कूलादितिचशुद्धदेशोपलक्षणं ॥ विष्णुपुराणे ॥वल्मीक
मूषकोत्खातांमृदमन्तर्जलात्तथा ॥ शौचावशिष्टांगेहाच्चनादद्याल्लेपसंभवां॥अन्तःप्राण्य

वपन्नांचहलोत्खातांचपार्थिव॥ परित्यजेन्मृदस्त्वेताः सकलाशौचसाधने॥अन्तःप्राण्यव
पन्नांसकीटां॥अथब्रह्मपुराणे॥सुनिर्णिक्तेमृदंदद्यान्मृदंतेलापएवहि॥सुनिर्णिक्तेकेवलज
लप्रक्षालिते॥ तथाचगौतमः॥गंधलेपापकर्षणेशौचममेध्यस्यतदद्भिःपूर्वंमृदाचेति ॥ एवं
चसुनिर्णिक्तपदंकाष्ठादिप्रोञ्छितगुदानुवादकमित्ययुक्तंव्यर्थत्वाच्च अतएवसुनिर्णिक्तेसु
प्रक्षालितेपाद्यादाविति कल्पतरुव्याख्यातं॥मनुः॥एकालिंगेगुदेतिस्रस्तथैवैककरेदश॥
उभयोःसप्तदातव्यामृदःशुद्धिमभीप्सता ॥एककरेवामे ॥शंखः॥मृत्तिकातुसमादिष्टात्रि
पर्वापूयतेयया॥अयंचपरिमाणविधिर्गुदंविहायबोद्धव्यः॥अर्द्धप्रसृतिमात्रातुप्रथमामृत्ति
कास्मृता॥ द्वितीयाचतृतीयाचतदर्द्धापरिकीर्तिता॥इतिदक्षेणगुदेपरिमाणान्तरविधाना
त् ॥अत्रच लिंगेमृत्तिकाद्वयं गुदेपंच सप्तवामकरे चतुर्दशविंशतिर्वात्रिंशद्वाहस्तद्वये चतु
र्दश षोडशवामृत्तिकाःस्मृत्यंतरेविहितास्ताश्चलेपानुवृत्तिशंकायांबोद्धव्याः॥अन्यथामा
नवकल्पएव बहुभिःसंवादान्मानवपक्षेऽपिवामकरपृष्ठेषण्मृत्तिकादेयाः॥ षट्पृष्ठतइति

हारीतवचनात् ॥ अत्रयमः ॥ तिस्रस्तुमृत्तिकादेयाःकृत्वातुनखशोधनं ॥ हस्तयोरितिशे
षः॥एवंचपुनःसप्तमृत्तिकाइतिब्रह्मपुराणीयंलेपशंकायां॥पुनर्यमः॥तिस्रस्तुपादयोर्देयाः
शुद्धिकामेननित्यशः ॥ तिस्रइतिप्रतिपादम् ॥ एतच्चात्यंतशंकायामन्यथातुप्रतिपादमेकै
का पादयोर्द्वे इतिब्रह्मपुराणात् ॥ मनुः ॥ एतच्छौचंगृहस्थानांद्विगुणंब्रह्मचारिणां ॥ त्रि
गुणंतुवनस्थानांयतीनांतुचतुर्गुणं ॥ इदंतुद्वैगुण्यादिसंख्यामात्रे तदनंतरमेवाभिधानात्
न्यूनाधिकंनकर्त्तव्यंशौचंशुद्धिमभीप्सतेतिदक्षोक्तं संख्यापरिमाणोभयपरंविशेषाभावा
त्॥एवंच॥यावत्साध्वितिमन्येतताच्छौचंविधीयते॥प्रमाणंद्रव्यसंख्यावानशिष्टैरुपदि
श्यते॥इतिदेवलवचनंचातुराश्रम्यादन्यत्र तत्रसंख्यादेरश्रवणात् उदकविषयंवा ॥दात
व्यमुदकंतावद्यावात्स्यान्मृत्तिकाक्षयइतिदक्षेणोक्तत्त्वात् ॥ आपस्तम्बः ॥ अह्निशौचंय
थाप्रोक्तंनिश्यर्द्धंतुतदिष्यते ॥ पथिपादस्तुविज्ञेयआर्त्तःकुर्याद्यथाबलं ॥ ऋष्यशृंगः ॥ य
स्मिन्स्थानेकृतंशौचंवारिणातच्चशोधयेत्॥नशुद्धिस्तुभवेत्तस्यमृत्तिकांयोनशोधयेत्॥मूत्र

मात्रोत्सर्गेदक्षः ॥ एकालिंगेतुसव्येत्रिरुभयोर्मृद्द्वयंस्मृतं ॥ बौधायनः ॥ मूत्रवद्रेतसःसमु
त्सर्गे ॥ देवलः ॥ धर्मविद्दक्षिणंहस्तमधःशौचेनयोजयेत् ॥ तथैववामहस्तेननाभेरूर्द्ध्वंन
शोधयेत् ॥ प्रकृतिस्थितिरेषास्यात्कारणादुभयक्रिया ॥ कारणाद्रोगादेः उभयक्रिया द
क्षिणहस्तेनाधःकायशोधनंवामहस्तेनऊर्द्ध्वकायशोधनम् ॥ शौचानंतरं ॥ हारीतः ॥ गोम
येनमृदावाकमण्डलुंपरिमृज्यपूर्ववदुपस्पृश्यादित्यंसोममग्निंवावीक्षेत ॥ अत्रदिवाआ
दित्यंरात्रौसोममुभयोरभावेऽग्निमितिबोद्धव्यम्॥ब्रह्मपुराणे॥ पादयोर्द्वेगृहीत्वाचसुप्रक्षा
लितपाणिना ॥त्रिराचम्यततः शुद्धःस्मृत्वाविष्णुंसनातनं ॥अत्रशंखलिखितौ॥ आचम्ये
शानंमनसाध्यायेत् ॥ व्यासः ॥ शौचंकृत्वामूत्रोच्चारौनपश्येत् ॥ दृष्ट्वादित्यमग्निंसोमंवाप
श्येत् ॥ अत्रवसिष्ठेनगोब्राह्मणदर्शनमधिकमुक्तम् ॥ ॥ अथाचमनविधिः ॥ ॥ तत्र
देवलः ॥ प्रथमंप्राङ्मुखःस्थित्वापादौप्रक्षालयेच्छनैः ॥ उदङ्मुखोवादैवत्येपैतृकेद
क्षिणामुखः ॥ शिखांबद्ध्वावसित्वा द्वे निर्णिक्तेवाससीशुभे ॥ एवमेतद्दर्शनात्स्त्रत्यक्पादाव

सेचनमित्यापस्तंबीयं पश्चिमाभिमुखत्वंकेवलपादप्रक्षालनविषयं॥तथा॥ इत्येवमाङ्घिरा
जानुप्रक्षाल्यचरणौपृथक् ॥ हस्तौचामणिबंधाभ्यांपश्चादासीतसंयतः ॥ अथापःप्रथ
मात्तीर्थाद्दक्षिणात्रिःपिबेत्समम् ॥ अशब्दमनवस्त्रावमबाहिर्जान्वबुद्बुदम् ॥ आजान्विति
अध्वभ्रमणादिनातत्पर्यंतमशौचे॥ आजंघाभ्यां पादावितिहारीतोक्तेः ॥ अत्रभाविष्य
पुराणे ॥ समौतुचरणौकृत्वातथाबद्धशिखोनृप ॥ तथा ॥ घनांगुलिकरंकृत्वाएकाग्रः सु
मनाद्विजः ॥ नरसिंहपुराणे ॥ दक्षिणंतुकरंकृत्वागोकर्णाकृतिवत्पुनः ॥ त्रिः प्रिवेद्वीक्षि
तंतोयमास्यंद्भिःपरिमार्जयेत् ॥ मनुः ॥ ब्राह्मेणविप्रतीर्थेननित्यकालमुपस्पृशेत् ॥ काय
त्रैदशिकाभ्यांवानापित्र्येणकदाचन ॥ विप्रइतिआचमनकर्तृमात्रोपलक्षणम् ॥ आचम
नोद्देशेनतीर्थाभिधानात् कायंप्राजापत्यं त्रैदशिकंदैवं अत्रसम्भवेब्राह्मतीर्थेनैवाचमनं
नित्यकालमितिश्रवणात् ब्राह्मणादिनाब्राह्मतीर्थावरोधेकायत्रैदशिकाभ्यामिति व्यव
स्थितोविकल्पःपित्र्यंतुसदानिषिद्धं ॥ नपित्र्येणकदाचनेत्यभिधानात् ॥ याज्ञवल्क्यः॥

कनिष्ठादेशिन्यंगुष्ठमूलान्यग्रंकरस्यच ॥ प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥ दे
शिनीतर्जनी ॥ हारीतः ॥ अन्तरूर्वोर्हस्तौकृत्वात्रिरथाशब्दंपिबेत् ॥ याज्ञवल्क्यः ॥
अद्भिस्तुप्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः ॥हृत्कंठतालुगाभिश्चयथासंख्यंद्विजातयः ॥
शुध्येरन्स्त्रीचशूद्रश्चसकृत्स्पृष्टाभिरंततः ॥ अन्ततओष्ठप्रांततः ॥आपस्तम्बः॥भूमिगता
स्वप्स्वाचम्यप्रयतोभवति॥यद्वा प्रयतआचामेद्भूमिगतास्वितिउद्धरणस्थानमपेक्षितं उ
द्धृत्यपरिप्लुताभिरद्भिरितिशंखवचनात् ॥ गौतमः ॥ शुचौदेशेआसीनोदक्षिणबाहुंजान्वं
तरेकृत्वायज्ञोपवीत्यामणिबन्धात्पाणीप्रक्षाल्यवाग्यतोहृदयस्पृशस्त्रिश्चतुर्वाअपआचा
मेत् ॥ पादौचाभ्युक्षेतखानिचोपस्पृशेत् ॥ शीर्षण्यानिचमूर्द्धनिदद्यात् ॥ हृदयस्पृशइति
ब्राह्मणपक्षे चतुर्वेतित्रिराचामतोऽपरितोषपक्षे एवंचतुर्वेतिफलभूमार्थमितिव्याख्यानम
शुद्धं कल्पनाप्रसंगात् खानिइन्द्रियाणि उपस्पृशेदपइत्यन्वीयते ॥ तदुक्तंगोभिलगृह्ये
इन्द्रियाण्यद्भिः संस्पृशेत् अक्षिणीनासिकेकर्णाविति ॥ मनुरप्याह ॥ खानिचैवंस्पृशेद

द्विरिति ॥ दक्षः ॥ प्रक्षाल्यहस्तौपादौच त्रिःपिबेदम्बुवीक्षितम् ॥ संवृत्यांगुष्ठमूलेनद्विः
प्रमृज्यात्ततोमुखं ॥ संहृत्यतिसृभिः पूर्वमास्यमेवमुपस्पृशेत् ॥ अंगुष्ठेनप्रदेशिन्याघ्राणं
पश्चादनंतरं ॥ अंगुष्ठानामिकाभ्यांचचक्षुःश्रोत्रेपुनःपुनः ॥ कनिष्ठांगुष्ठयोर्नाभिंहृदयंतुत
लेनवै ॥ सर्वाभिश्चशिरः पश्चाद्बाहूचाग्रेणसंस्पृशेत् ॥ तिसृभिस्तर्जनीमध्यमानामिका
भिः अत्रघ्राणस्यचक्षुषः श्रोत्रस्यचस्पर्शनंपुटद्वये तदभिप्रायेणपुनःपुनरिति बाहुस्पर्शनं
चांसदेशे ॥तथाचशंखः॥तर्जन्यंगुष्ठयोगेनस्पृशेन्नासापुटद्वयं ॥ अंगुष्ठमध्यमायोगेस्पृशे
न्नेत्रद्वयंततः ॥ अंगुष्ठानामिकायाश्चयोगेनश्रवणेस्पृशेत् ॥ कनिष्ठांगुष्ठयोगेनस्पृशेत्
स्कंधद्वयंततः ॥ इन्द्रियस्पर्शनानंतरं॥भविष्यपुराणे ॥ यद्भूमावुदकंवीरसमुत्सृजतिमान
वः ॥ वासुकिप्रमुखान्नागांस्तेनप्रीणातिभारत ॥ देवलः ॥ सोपानत्कोजलस्थोवामुक्तके
शोऽपिवाद्विजः॥उष्णीषीवापिनाचामेद्वस्त्रेणोद्वेष्टच्यवाशिरः॥नगछन्नशयानश्चनचलन्नप
रान्स्पृशन्॥नहसन्नैवसंजल्पन्नात्मानंचैववीक्षयन्॥केशान्नीवीमधःकायमस्पृशन्धरणी

मपि॥ यदिस्पृशतिचैतानिभूयःप्रक्षालयेत्करम्॥आत्मानंहृदयंवीक्षयन्निति स्वार्थेणिच्॥
अधःकायोनाभ्यपेक्षया॥व्यासः॥ शिरःप्रावृत्यकण्ठंवामुक्तकक्षशिखोऽपिवा॥ अकृत्वा
पादयोःशौचमाचांतोऽप्यशुचिर्भवेत्॥अत्रब्रह्मपुराणे॥कण्ठंशिरोवाप्रावृत्यरथ्यापणग
तोऽपिवा॥ आपणःक्रयविक्रयभूमिः॥ प्रचेताः॥ नानंतर्वासानशब्दंकुर्वन्नचामेध्येअन
न्तर्वासाअन्तर्वस्त्रशून्यः॥ अत्रगोभिलः॥ नांतरीयैकदेशेनकल्पयित्वोत्तरीयकं॥बौधाय
नः॥ दानमाचमनंहोमंभोजनंदेवतार्चनम्॥ प्रौढपादोनकुर्वीतस्वाध्यायंपितृतर्पणं॥आ
सनारूढपादस्तुजानुनोर्जंघयोस्तथा॥ कृतावसिक्थिकोयश्चप्रौढपादः सउच्यते॥ म
रीचिः॥ नबहिर्जानुर्नत्वरयानासनस्थोनचोत्थितः॥ नपादुकास्थोनान्यचित्तःशुचिः प्रय
तमानसः॥ तथा॥ भुक्तासनस्थोप्याचामेन्नान्यकालेकदाचन॥ गोभिलः॥ जानुभ्यामू
र्ध्वमाचम्यजलेतिष्ठन्नदुष्यति॥ पैठीनसिः॥ अन्तरुदकमाचान्तोऽन्तरेवशुद्ध्यति॥बहिरु
दकमाचान्तोबहिरेवशुद्धोभवति॥ तस्मादन्तरेकंपादंकृत्वाचामेत्सर्वशुद्धोभवति॥व्यासः

अपःपाणिनखाग्रेणआचामेद्यस्तुवैद्विजः ॥ सुरापानेनतत्तुल्यमित्येवमृषिरब्रवीत् ॥ बौ
धायनः॥पादप्रक्षालनेनोच्छिष्टेनचनाचामेत् यद्याचामेत्किंचित्तुभूमौस्त्रावयित्वाचामेत् ॥
आपस्तम्बः ॥ नाप्स्युदकशेषेणवृथाकर्माणिकुर्वीत॥आचामेद्वापाणिनासंक्षुब्धेननैकपा
ण्याऽऽवर्जितेननाचामेत् ॥तथा ॥ नवर्षधारास्वाचामेत् ॥ नप्रदरोदकेननतप्ताभिश्चाका
रणात् ॥ प्रदरोविदीर्णभूभागः॥अकारणात् रोगादिव्यतिरिक्तेन ॥ अतएववासिष्ठः॥ प्र
दरादपियोग्यास्तागोतर्पणायाःस्युः॥नवर्णरसदुष्टाभिर्याश्चस्युरशुभागमाः ॥अत्रशंख
लिखितौ ॥ नशूद्राशुच्येकपाण्यावर्जिताभिः ॥ अत्राशुचिनाएकपाणिनापरेणावर्जितंज
लंनिषिद्धंशूद्रसाहचर्यात् ॥मूत्रपुरीषेकुर्वन्दक्षिणहस्तेगृण्हातिसव्यआचमनीयमितिबौ
धायनेनवामकरेकमण्डलुधारणविधानाच्चेतिप्रपंचितंछंदोगाह्निके॥ अथाचमननिमित्ता
नि॥तत्रपैठीनसिः॥उच्छिष्टरेतोविण्मूत्रंसंस्पृश्योन्मृज्याचम्यप्रयतोभवति त्रिःप्रक्षाल्य
चतंदेशं॥ आचमनप्रक्षालनयोरर्थक्रमेणपाठक्रमबाधः ॥ मनुः ॥ वसाशुक्रमसृङ्मज्जा

मूत्रंविट्कर्णविण्णखाः ॥ श्लेष्माश्रुदूषिकास्वेदाद्वादशैतेनृणांमलाः॥ बौधायनः॥आददी
तमृदोऽपश्चषट्सुपूर्वेषुशुद्धये ॥ उत्तरेषुचषट्स्वद्भिःकेवलाभिर्विशुध्यति ॥ अत्रप्रक्षालना
नंतरमाचमनं॥ तथाचदेवलः॥उच्छिष्टंमानवंस्पृष्ट्वाभोज्यंवापितथाविधं ॥ तथैवहस्तौपा
दौचप्रक्षाल्याचम्यशुद्ध्यति ॥ यदंभःशौचनिर्मुक्तंक्षितिंप्राप्यविनश्यति ॥ प्रक्षाल्याशुचि
लिप्तंचसंस्पृश्याचम्यशुध्यति ॥ यदंभइत्यादिशौचइत्यादिजलार्द्रितभूभागंसंस्पृश्याशु
चिलिप्ताङ्गंच प्रक्षाल्याचम्यशुध्यतीत्यर्थः ॥ बौधायनः ॥ नीवींविस्त्रस्यपरिधायोपस्पृशे
त् ॥ आपस्तम्बः ॥ स्वप्नेक्षुवथौसिंहाणिकायाअश्रुलंभेलोहितस्यकेशानामग्नेर्गवांब्राह्म
णस्यस्त्रियाश्चालंभेमहापथंगत्वाऽमेध्यंचोपस्पृष्ट्वाऽप्रयतंचमनुष्यं नीवींपरिधायोपस्पृशे
त्॥ क्षुवथौहिक्कायांसिंहाणिकायाअश्रुणश्चस्पर्शे ॥ तथा रिक्तपाणिर्वयसउद्यम्योपस्पृ
शेत् ॥शक्तिविषयेनमुहूर्तमप्यप्रयतःस्यात्॥ रिक्तपाणिःशून्यपाणिर्वयसःपक्षिणः उद्य
म्य पाणिमितिशेषः॥ विष्णुः॥ पञ्चनखास्थिनिःस्नेहंस्पृष्ट्वाचामेत् ॥चांडालम्लेच्छसंभा

षणेच॥ हारीतः॥स्त्रीशूद्रोच्छिष्टाभिभाषणेमूत्रपुरीषोत्सर्गदर्शनेदेवतामभिगन्तुकामआ
चामेत् ॥ तथारथ्यामाक्रम्यसुषुप्सुः॥तथाजलानुवृत्तोनोत्तरेदनुपस्पृश्य॥यमः॥उत्तीर्यो
दकमाचम्यावतीर्योपस्पृशेत्ततः॥यएवंश्रेयसायुक्तोवरुणश्चैवपूजितः॥मन्वङ्गिरोबृहस्प
तयः॥सुप्त्वाक्षुत्वाचभुक्त्वाचनिष्ठीव्योक्त्वानृतंवचः॥पीत्वाचयोध्येष्यमाणश्चाचामेत्प्रयतो
पिसन् ॥संवर्त्तः॥ चर्मारंरजकंवेणुंधीवरंनटमेवच॥ एतान्स्पृष्ट्वानरोमोहादाचामेत्प्रयतो
पिसन् ॥ ब्रह्मपुराणे ॥ अधमवर्णस्यसंलापेसुप्तेवादन्तधावने ॥ आचम्यप्रयतोभूत्वात
तःशुद्धोभवेन्नरः ॥ अधमवर्णश्चाण्डालादिः ॥ वायुपुराणे ॥ निष्ठीवनेतथाभ्यङ्गेतथापा
दावसेचने ॥ उच्छिष्टस्यचसंभाषादशुच्युपहतस्यच ॥संदेहेषुचसर्वेषुशिखांमुक्त्वातथैव
च ॥ विनायज्ञोपवीतेन नित्यमेवमुपस्पृशेत् ॥ उच्छिष्टस्यापिसंस्पर्शेदर्शनेचान्त्यज
न्मनाम् ॥ सर्वेषुआचमनानाचमननिमित्तेषु विनायज्ञोपवीतेनेतियज्ञोपवीतमोचनमा
चमननिमित्तमुक्तं॥अत्रस्नानमध्यपातितान्याचमननिमित्तान्यग्रेवक्ष्यामः॥ ॥अथद्विरा

चमननिमित्तानि ॥ ॥ अत्रयाज्ञवल्क्यः ॥ ॥ स्नात्वापीत्वाक्षुतेसुप्तेभुक्त्वारथ्योपसर्पणे ॥
आचांतःपुनराचामेद्वासोऽपिपरिधायच ॥ पैठीनसिः ॥ कलिलकासश्वासापगमेरथ्याच
त्वरश्मशानान्निष्क्रम्याचांतः पुनराचामेत् ॥ कलिलंकठिनश्लेष्मा श्वासोऽत्रविकृतः॥अ
न्यस्यसदातनत्वात् ॥ यमः ॥ सकर्दमेतुवर्षासुप्रविश्यग्रामसंकरं ॥ जंघाभ्यांमृत्तिकास्ति
स्त्रः पद्भ्यांतुद्विगुणाःस्मृताः ॥एतत्प्रक्षालनंरथ्याक्रमणनैमित्तिकाचमनात्प्राक्॥ वसिष्ठः॥
आचांतःपुनराचामेद्वासोऽपिपरिधायच ॥ ओष्ठौसंस्पृश्यचतथायत्रस्यातामलोमकौ ॥
॥ आपस्तंबः ॥ भोक्ष्यमाणस्तुप्रयतोऽपिद्विराचामेत् द्विः प्रमृजेत् ॥ शंखलिखितौ॥मूत्र
पुरीषष्ठीवनादिषुचशुक्तवाक्याभिधानेषुचपुनरुपस्पृशेत् ॥शुक्तंपरुषं॥ अत्रद्विराचमनेपा
णिपादप्रक्षालनंसकृदेवदृष्टैक्यात् ॥ आस्यमार्जनंपुनरावर्त्तते दृष्टभेदात्॥आस्यस्पर्शा
दिकमप्यावर्त्तते अदृष्टार्थत्वात् ॥ आचांतस्यपुनराचमनविधानात् सांगस्यैवावृत्तिः॥अ
तएवत्रिरभ्यस्तमाचमनमावर्त्तते॥नतुद्विरित्यनेनत्रिरित्यस्यबाधः ॥ ॥ अथाचमना

नुकल्पविधिः ॥ ॥ तत्रमार्कण्डेयपुराणे ॥ ॥ कुर्यादाचमनंस्पर्शंगोपृष्ठस्यार्क
दर्शनं ॥ कुर्वीतालंभनंवापिदक्षिणश्रवणस्यच ॥ यथाविभवतोह्येतत्पूर्वाभावेततःपरम्॥
नविद्यमानेपूर्वेस्मिन्नुत्तरप्राप्तिरिष्यते ॥ पराशरः ॥ क्षुतेनिष्ठीवितेचैवदंतश्लिष्टेनृतेतथा॥
पतितानांचसम्भाषेदक्षिणंश्रवणंस्पृशेत् ॥ अत्रबौधायनः ॥ आर्द्रंतृणंभूमिंगोमयंचोप
स्पृशेत् ॥ तत्रापस्तंबः ॥ आर्द्रंवाशकृत् ओषधिंवाभूमिंवा ॥ शकृद्गोमयं ॥ अथाचमना
पवादः॥तत्रापस्तंबः॥नश्मश्रुभिरुच्छिष्टोभवति अंतरास्येसद्भिर्यावन्नहस्तेनस्पृशति ॥
॥ वसिष्ठः ॥ नश्मश्रुगतोलेपः अशुचिरितिशेषः ॥ गौतमः ॥ दन्तश्लिष्टेदंतवत्॥अन्यत्र
जिह्वाभिमर्षणात् ॥प्राक्च्युतेरित्येके ॥ च्युतेरास्रावविद्यान्निगिरन्नेवतच्छुचिः ॥ प्राक्
च्युतेरित्येकइतिजिह्वाश्लिष्टमपिदन्तलग्नंयदिनच्यवते तदाशुद्ध्यतीत्यर्थः॥ तेनदन्तलग्नं
जिह्वास्पृष्टमाचमनार्थमाकर्षणीयं॥यदिनच्यवतेतदादन्तलग्नेसत्याचमनंनकर्त्तव्यम् ॥
॥ तथादेवलः ॥ भोजनेदन्तलग्नानिनिर्हृत्याचमनंचरेत् ॥ दंतलग्नमसंहार्यंलेपंमन्येत

भवेदशौचमत्यर्थंतृणवेधाद्व्रणेकृते ॥ च्यु
दंतवत् ॥ नतत्रबहुशःकुर्याद्यत्नमुद्धरणेपुनः ॥ भवेदशौचमत्यर्थंतृणवेधाद्व्रणेकृते ॥ च्यु
दंतवत् ॥ नतत्रबहुशःकुर्याद्यत्नमुद्धरणेपुनः ॥
तेरित्यादि यद्दन्तलग्नमाचमनोत्तरंच्यवतेतदास्रावबल्लालावन्निगिरन्नेवशुध्यति ॥ तथाव
सिष्ठः ॥ दंतवद्दंतलग्नेषुयच्चाप्यंतर्मुखेभवेत्॥आचांतस्यावशिष्टंस्यान्निगिरन्नेवतच्छुचिः॥
यच्चापीति दंतच्युतमप्यन्नकणादियत् प्रमादावशिष्टमाचमनोत्तरमुपलभ्यतेतदपिनि
गिरन्नेवशुद्ध्यतीत्यर्थः ॥ शंखः ॥ दंतवद्दंतलग्नेषुरसवर्जं ॥ मनुः ॥ नोच्छिष्टंकुर्वतेमुख्याविप्रुषोङ्गंनयंतियाः ॥ अस्यायमर्थः मुखच्युताजलबिंदवोभूमिपतिताः स्पृष्टाअपिशुचयः
अंगलग्नास्तुरोमहृयक्लेदसमर्थाआचमनहेतवः ॥ तथाचपैठीनसिः ॥ भूमिगताबिंदवःप
रामृष्टाः पूताविप्रुषःशुद्धाःद्विलोमक्लिन्नेष्वाचामेत् ॥ तथा ॥ स्पृशंतिबिंदवःपादौयआचा
मयतःपरान् ॥ भूमिगैस्तेसमाज्ञेयानतैरप्रयतोभवेत् ॥ अत्र्यंगिरसौ ॥ मधुपर्केचसोमेच
अप्सुप्राणाहुतीषुच ॥ नोच्छिष्टस्तुभवेद्विप्रोयथात्रेर्वचनंतथा ॥ अप्सुउच्छिष्टतानिषेधात्
पीलापइतिनैमित्तिकमाचमनं॥प्रयतोपीतिश्रवणाच्च॥एवंचपीलापइत्याचमनविधिभया

दप्स्वित्यपोशनविषयंप्राणाहुतिसन्निकर्षादितिकल्पतरुकारादीनांव्याख्यानमशुद्धम्॥
शातातपः ॥ दंतलग्नेफलेमूलेभक्ष्येस्नेहेतथैवच ॥ तांबूलेचेक्षुखंडेचनोच्छिष्टोभवतिद्विजः॥
फलेकटुतिक्तकषायेजातीफलादौसमाचारादित्याहुः भक्ष्येकटुकषाये ॥ तथाचात्रलघुहा
रीतः ॥ कषायकटुताम्बूलेभुक्तस्नेहानुलेपने ॥ मनुः॥उच्छिष्टेनतुसंस्पृष्टोद्रव्यहस्तःकथंच
न ॥ अनिधायैवतद्द्रव्यमाचांतःशुचितामियात् ॥ द्रव्यमन्नपानादिव्यतिरिक्तं ॥ तथाच
बृहस्पतिः ॥ प्रचरंश्चान्नपानेषुयदोच्छिष्टमुपस्पृशेत् ॥ भूमौनिधायतद्द्रव्यमाचम्यप्र
चरेत्पुनः ॥ अरण्येऽनुदकेरात्रौचौरव्याघ्राकुलेपथि ॥कृत्वामूत्रंपुरीषंचद्रव्यहस्तोनदुष्य
ति ॥ शौचंतुकुर्यात्प्रथमंपादौप्रक्षालयेत्ततः॥ उपस्पृश्यतदभ्युक्ष्यगृहीतंशुचितामियात्
द्रव्यहस्तोगृहीतद्रव्यः द्रव्यपदंचासंकुचितमेव ॥ कृत्वामूत्रंपुरीषंचद्रव्यहस्तः कथंचन॥
भूमावन्नंप्रतिष्ठाप्यकृत्वाशौचंयथाविधि ॥तत्संयोगात्तुपक्वान्नमुपस्पृश्यततःशुचिरित्याप
स्तंबवचनात् ॥ प्रक्षाल्यपादौनिक्षिप्यआचम्याभ्युक्षणंपुनः ॥ पुष्पादीनांतृणादीनां

प्रोक्षणंहविषांतथेतिवायुपुराणवचनाच्च ॥ निक्षिप्यद्रव्यंभूमौधृत्वेत्यर्थः ॥ ॥ अथदं
तधावनं ॥ ॥ तत्रदक्षः ॥ ॥ उषःकालेतुसंप्राप्तेशौचंकृत्वायथाविधि ॥ ततः स्नानंप्रकुर्वीत
दंतधावनपूर्वकं ॥ उषःकालः संध्यातःपूर्वंप्राचीप्रकाशवान् ॥ याज्ञवल्क्यः ॥ प्रातःसंध्या
मुपासीतदंतधावनपूर्वकं ॥ अत्रस्नानेसंध्यायांचदंतधावनस्यनाङ्गत्वं ॥ मुखेपर्युषितेनि
त्यंभवत्यप्रयतोनरः ॥ तस्मात्पूर्वंप्रयत्नेनभक्षयेद्दंतधावनमितिवृद्धशातातपेनाऽऽचमनव
त्स्वतंत्रस्यैवशुद्धिहेतुतयाभिधानात् ॥ एवंचदंतान्प्रक्षाल्यस्नायादितिछंदोगपरिशिष्टेपि
कालार्थः संयोगः ॥ छंदोगपरिशिष्टे ॥ उत्थायनेत्रेप्रक्षाल्यशुचिर्भूत्वासमाहितः ॥ परिज
प्यचमंत्रेणभक्षयेद्दंतधावनं ॥ आयुर्बलंयशोवर्चःप्रजाःपशुवसूनिच ॥ ब्रह्मप्रज्ञांचमे
धांचत्वन्नोधेहिवनस्पते ॥ शुचिर्भूत्वाचम्येत्यर्थः ॥ मंत्रेणायुर्बलमित्यादिनावक्ष्यमाणेन
भक्षयेदितिदंतघर्षणाभिप्रायं ॥ तदुक्तमत्रैव ॥ नारदाद्युक्तवार्क्षेयमष्टांगुलमपाटितं ॥
सत्वचंदंतकाष्ठंस्यात्तदग्रेणप्रधावयेदिति ॥ अत्रनृसिंहपुराणे ॥ प्रादेशमात्रमपिवावस्वं

गुलमथापिवा ॥ विष्णुः ॥ कनीन्यग्रसमस्थौल्यंसकूर्चंद्वादशांगुलं॥ प्रातर्भुक्त्वाचयतवा
ग्भक्षयेद्दंतधावनं॥ सकूर्चंचूर्णिताग्रं भुक्त्वाचेतिभोजनोत्तरं दंतलग्ननिर्हरणार्थंदंतधावन
मित्यर्थः ॥ भोजनेदंतलग्नानिनिर्हृत्याचमनंचरेदितिदेवलवचनात् ॥ एवंचात्रदंतधावने
कालादिनिषेधोनादर्त्तव्यः सामर्थ्यात् ॥ हलायुधनिबंधेतु ॥ भुक्त्वेतियतिविषयतयाऽप्या
स्यातं॥तथा अद्यादुदङ्मुखः प्राङ्मुखोवा ॥महाभारतेतथा॥प्रक्षाल्यपादौहस्तौचमुखं
चसुसमाहितः ॥ दक्षिणंबाहुमुद्धृत्यकृत्वाजान्वंतरंततः ॥ प्राङ्मुखश्चोपविष्टश्चभक्षयेद्दं
तधावनं ॥ दक्षिणंबाहुमुद्धृत्यउपवीतीभूत्वेत्यर्थः ॥ विष्णुः ॥ प्रक्षाल्यभुक्त्वातज्जह्याच्छुचौ
देशेप्रयत्नतः ॥ नरसिंहपुराणे ॥ तस्माच्छुष्कमथार्द्रंवाभक्षयेद्दंतधावनं ॥ खदिरश्चकदं
बश्चकरंजश्चवटस्तथा ॥ तित्तिणीवेणुपृष्ठञ्चआम्रनिम्बौतथैवच ॥ अपामार्गश्चबिल्वश्च
अर्कश्चोदुंबरस्तथा॥एतेप्रशस्ताः कथितादंतधावनकर्मणि॥ दन्तकाष्ठस्यवक्ष्यामिसमा
सेनप्रशस्ततां ॥ सर्वेकंटकिनःपुण्याःक्षीरिणश्चयशस्विनः ॥ अत्रविष्णुः ॥ वटासनार्क

खदिरकरंजकरवीरसर्ज्जारिमेदापामार्गमालतीककुभविल्वानामन्यतमं कषायंकटुतिक्तं वा ॥ असनःआसनइतिप्रसिद्धः सर्ज्जःशालः अरिमेदोविट्खदिरः ॥ अत्रहारीतः ॥ बिल्वखदिराम्रपौलासशिरीषापामार्गाणामेकतमं पौलासःआम्रातकः तथापालाशकोविदारश्लेष्मातकातिल्वकशाकवृक्षनिर्गुण्डीशिखंडिवेणुवर्ज्जं ॥ तिल्वकःचील्हइतिप्रसिद्धः शिखंडीमयूरशिखा वेणुनिषेधस्त्वंगिरविषयः शाकवृक्षःसगमनइतिप्रसिद्धः प्लक्षमाषकरवीरकरंजशमीशिंशपाइत्येके दधित्थहरीतक्यऽश्वत्थशाल्मलकानिइत्यपरे एकेपरेइत्युभयत्रवर्ज्जयित्वेतिशेषः॥तथानार्द्रेणाशुचिनातिशुष्कंनातिस्थूलमपोथिताग्रमनोष्ठग्रंथि ॥अनार्द्रमितिसद्यश्छिन्ननिवृत्त्यर्थम् विधिस्तुपूर्वमीषदार्द्रस्य अपोथिताग्रम् अचूषिताग्रम् अनोष्ठग्रंथि ओष्ठस्पर्शिग्रंथिरहितं ॥ विष्णुः ॥ नश्लेष्मातकारिष्टविभीतकधवधन्वनजलकोविदारशमीपीलुपिप्पलेंगुदीगुग्गुलुजं नवर्व्वूरनिर्गुंडीशिग्रुतिलकातिंदुकजं नपारिभद्राम्लिकामोचकाशाल्मलीशणजम् नमधुरंनाम्लंनोर्द्ध्वशुष्कंनसुषिरंनपू

तिगंधिनपिच्छलं॥धन्वनःधामनिरितिप्रसिद्धः निर्गुंडीसिंदुवारः॥ महाभारते॥ त्याज्यं सपत्रमज्ञातमूर्द्ध्वशुष्कंचपाटितं॥ त्वग्विहीनंग्रंथिमुखंतथापालाशशांशिपं॥ ऋजुंवितस्तिमात्रंचकीटाग्निभिरदूषितं॥ ऋजुमित्यादिनाविधिः॥ ॥उशनाः॥ ॥नांगुलीभिर्दंतान्प्रक्षालयेत्॥ अत्रचशौचार्थदंतधावनेविहितखदिरादिद्रव्यविशेषाभावेसामान्यशास्त्रानुग्रहायसर्वशक्तिन्यायात्द्रव्यांतरोपादानशक्तौपालाशादिनिषेधाः सार्थकाः॥अत्रमहाभारते॥ पर्वस्वपिचवर्जयेत्॥ नृसिंहपुराणे॥ प्रतिपद्दर्शषष्ठीषुनवम्यांचैवसत्तमाः॥ दंतानांकाष्ठसंयोगोदहत्यासप्तमंकुलं॥ अलाभेदंतकाष्ठानांप्रतिषिद्धदिनेतथा॥ अपांद्वादशगंडूषैर्मुखशुद्धिर्विधीयते॥ ॥अथप्रातःस्नानादि॥ ॥तत्रछंदोगपरिशिष्टे॥ कात्यायनः यथाहनितथाप्रातःस्नायान्नित्यमनातुरः॥ दंतान्प्रक्षाल्यनद्यादौगेहेचेत्तदमंत्रवत्॥ अल्पत्वाद्धोमकालस्यबहुत्वात्स्नानकर्मणः॥प्रातर्नतनुयात्स्नानंहोमलोपोविगर्हितः॥ गेहेइत्युद्धृतजलस्नानोपलक्षणं नद्याद्यभावेविधानात्॥ विष्णुः॥प्रातःस्नाय्यरु

णकरग्रस्तांप्राचीमवलोक्यस्नायात् ॥ अरुणकरग्रस्तामितिसंध्यापूर्वकालपरंसंध्यायां
निषेधादितिहरिहरः ॥तदयुक्तं॥संध्यापूर्वकालेऽपिरात्रित्वेनानिषेधात् ॥ तस्मादरुणकर
ग्रस्तामित्यसंकुचितमेव॥अतएवतत्रतत्रसंध्यास्नानकीर्त्तनम्॥अत्रचउदयात्प्राक्प्रातः
स्नानविधानात् ॥ सूर्योदयंविनानैवस्नानदानादिकाःक्रियाइति मार्कण्डेयपुराणमितर
विषयं ॥तथा॥अलक्ष्मीःकालकर्णीचदुःस्वप्नंदुर्विचिंतितं ॥अम्मात्रेणाभिषिक्तस्यनश्यंत
इतिधारणा ॥ कालकर्णीराक्षसी अम्मात्रेणेतिमंत्रादिकंविनापीत्यर्थः धारणानिश्चयः
॥दक्षः॥प्रातःस्नानंप्रशंसंतिदृष्टादृष्टकरंहितं॥सर्वमर्हतिपूतात्माप्रातःस्नायीजपादिकं ॥
दृष्टंकर्माधिकारः अदृष्टंजपादिद्वारापरलोकसिद्धिः॥एतच्चसर्वमर्हतीत्यनेनैववक्तव्यम्॥
अदृष्टंपापक्षयइतिकेचित् ॥ नरसिंहपुराणे॥पूर्वांसंध्यांसनक्षत्रामुपासीतयथाविधि॥गा
यत्रीमभ्यसेत्तावद्यावदादित्यदर्शनम् ॥ अनुदितहोमीतरविषयमेतत् ॥दक्षः॥ सन्ध्याक
र्मावसानेतुस्वयंहोमोविधीयते॥तत्रानुकल्पमाह॥ऋत्विक्पुत्रोगुरुर्भ्राताभागिनेयोथवि

ट्पतिः ॥ एतैरेवहुतंयत्तुतद्धुतंस्वयमेवहि॥विट्पतिर्जामाता॥वराहपुराणे ॥ उदयान्निःसृ
तंसूर्यंयस्तुभक्त्यानरोद्विजः ॥ दध्यक्षतांजलिभिस्तुतिसूभिःपूजयेच्छुचिः ॥ तस्यभावप्र
पन्नस्याशुभंयत्समुपार्जितम् ॥ तत्क्षणादेवनिर्दग्धंभस्मीभवतितस्यतत् ॥ मनुः ॥ मैत्रं
प्रसाधनंस्नानंदन्तधावनमंजनम् ॥ पूर्वाण्हएवकुर्वीतदेवतानाञ्चपूजनम् ॥ पूर्वाण्हएवे
तिपुरीषोत्सर्गेसतिसम्भवेनियमः॥केशप्रसाधनेचोत्सवादिनिमित्ताभावे दन्तधावनेभो
जनोत्तरविहितेतरे अंजनेभेषजेतरेसौवीरांजनादौ स्नानेदेवपूजनेचमध्याह्नादिविहि
तेतरे ॥ विष्णुपुराणे ॥ आचान्तश्चततःकुर्यात्पुमान्केशप्रसाधनम् ॥ आदर्शांजनमङ्ग
ल्यदूर्वाद्यालम्भनानिच ॥ छन्दोगपरिशिष्टे ॥ श्रोत्रियंसुभगाङ्गाञ्चअग्निमग्निचितंतथा॥
प्रातरुत्थाययः पश्येदापद्भ्यः सविमुच्यते॥ तथा ॥ पापिष्ठंदुर्भगांमद्यंनग्नमुत्कृत्तनासिक
म् ॥ प्रातरुत्थाययः पश्येत्तत्कलेरुपलक्षणम् ॥ अष्टभागंदिनंविभज्यप्रथमभागकृत्ये
॥ दक्षः ॥ देवकार्यन्ततःकृत्वा गुरुमङ्गलवीक्षणम् ॥ गुरुःपित्रादिःमङ्गलंश्रोत्रियादिः ॥

॥ मनुः ॥ देवतामभिगच्छेत्तु धार्मिकांश्चद्विजोत्तमान् ॥ ईश्वरञ्चैवरक्षार्थंगुरुमेवचपर्वसु ॥
॥ छागलेयोयमोऽपिद्वितीये ॥ यतीनान्दर्शनञ्चैव स्पर्शनम्भाषणन्तथा ॥ कुर्व्वाणःपूयते
नित्यंतस्मात्पश्येत्तुनित्यशः ॥ अग्निचित्कपिलासत्रीराजाभिक्षुर्महोदधिः ॥ दृष्टमात्राःपु
नन्त्येतेतस्मात्पश्येत्तुनित्यशः॥सत्रीअन्नादिसत्रशीलः कृतसत्रयागइत्येके॥भिक्षुर्य्यतिः
॥ महाभारते ॥ यज्वाभिष्टान्नदःसत्रीशतायुर्धार्म्मिकःशुचिः ॥ ज्ञानसिद्धांस्तपःसिद्धान्
दृष्ट्वापापात्प्रमुच्यते ॥ वराहपुराणे॥ ब्राह्मणं वामनं दृष्ट्वा वराहञ्च जलोत्थितम् ॥ नमस्ये
च्चैवयोभक्त्यासपापेभ्यः प्रमुच्यते ॥ ब्रह्मपुराणे ॥ स्वमात्मानंघृतेपश्येद्यदीच्छेच्चिरजी
वितुं ॥ आत्मानंशरीरम् ॥ नारदः॥लोकेऽस्मिन्मङ्गलान्यष्टौब्राह्मणोगौर्हुताशनः ॥ हिर
ण्यंसर्पिरादित्यआपोराजातथाष्टमः॥एतानिसततंपश्येन्नमस्येच्चार्चयेच्चयः॥प्रदक्षिणं
चकुर्वीततथास्यायुर्नहीयते ॥ वामनपुराणे॥कृत्वाशिरः स्नानमथाह्निकंचसम्पूज्यतोयेन
पितॄन्सदेवान् ॥ होमञ्चकृत्वालभनंशुभानांततोबहिर्न्निर्गमनंप्रशस्तम्॥ दूर्वादधिसर्पिर

थोदकुम्भंधेनुंसवत्सांवृषभंसुवर्णम् ॥ मृद्गोमयंस्वस्तिकमक्षतानि लाजामधुब्राह्मणक
न्यकाश्च ॥ श्वेतानिपुष्पाणितथाशमींच हुताशनञ्चन्दनमर्कबिंबम् ॥ अश्वत्थवृक्षञ्चस
मालभेतततस्तुकुर्य्यान्निजजातिधर्म्मम्॥देशानुशिष्टंकुलधर्म्ममग्र्यंस्वगोत्रधर्म्मंनहिस
न्त्यजेच्च॥आह्निकमहः स्नानम् एतच्चाभ्युदयादौ ॥अरुग्दिवाचरेत्स्नानंमध्याह्नात्प्राग्वि
शेषतइतिवसिष्ठवचनात् ॥ यदित्वाह्निकंसर्वमहःकृत्यमुच्येत तदासम्पूज्येत्यादिव्यर्थं
स्यात्॥सम्पूज्यतोयेनेतितर्प्पणपरं॥आलभनंस्पर्शनं॥शुभानांवक्ष्यमाणदूर्वादीनाम्॥
स्वस्तिकोभवनप्रभेदः॥अर्कबिम्बसमालभनम् निरीक्षणे पर्यवसितम्॥दक्षः॥द्वितीयेच
तथाभागे वेदाभ्यासोविधीयते ॥ वेदस्वीकरणम्पूर्वंविचारोऽभ्यसनंजपः ॥ तद्दानंचैव
शिष्येभ्योवेदाभ्यासोहिपञ्चधा ॥ समित्पुष्पकुशादीनांसकालःसमुदाहृतः ॥ स्वीकर
णमध्ययनम् ॥ एतच्चब्रह्मचारिणः ॥ ग्रहस्थस्याप्यनधीतवेदादिभागे ॥ तथाच आ
पस्तम्बः ॥ ययाविद्ययाचविरोध्येततांपुनराचार्यमुपेत्यसाधयेदिति ॥ याज्ञवल्क्यः ॥

॥ वेदार्थानधिगच्छेच्चशास्त्राणिविविधानिच ॥ यमः ॥ दानेनतपसायज्ञैरुपवासव्रतै
स्तथा ॥ नतांगतिमवाप्नोतिविद्ययायामवाप्नुयात् ॥ विद्ययाब्रह्मविद्ययेति व्याख्या
नमशुद्धं शास्त्रानुक्रमेणाभिधानात् ॥ दक्षः ॥ तृतीयेचतथाभागेपोष्यवर्गार्थसाधनम्॥
॥ गौतमः ॥ योगक्षेमार्थमीश्वरमधिगच्छेत् ॥ ॥ अथस्नानविधिः ॥ ॥ तत्रदक्षः ॥
चतुर्थेचतथाभागेस्नानार्थंमृदमाहरेत् ॥ शातातपः ॥ शुचौदेशेतुसाग्राह्याशर्कराश्मादिव
र्जिता ॥ रक्तागौरीतथाश्वेतामृत्तिकात्रिविधास्मृता ॥ नमृदंनोदकंवापिनानिशायांतुगो
मयं ॥ नगोमूत्रंप्रदोषेतुगृण्हीयाद्बुद्धिमान्नरः॥ निशायामितिनमृदंनोदकमित्यत्रापिसंब
ध्यते ॥ तथा ॥ वल्मीकाखूत्कराल्लेपाज्जलाच्चपथिवृक्षयोः॥ कृतशौचावशिष्टाचनग्राह्याः
सप्तमृत्तिकाः ॥ आखूत्करोमूषकोत्कीर्णमृत्तिकास्थानं॥लेपः कुड्यादीनाम्॥ दक्षः ॥मृत्ति
काःसप्तनग्राह्यावल्मीकेमूषकोत्करे॥अन्तर्जलेश्मशानेचवृक्षमूलेसुरालये ॥परस्नानाव
शिष्टाचश्रेयस्कामैःसदाबुधैः॥व्यासः॥स्नानंमध्यादिनेकुर्यात्सुजीर्णेऽन्नेनिरामयः॥एवंच॥

स्वप्नमध्ययनंस्नानमुच्चारंभोजनंहुतिं ॥ उभयोःसंध्ययोर्न्नित्यंमध्याह्नेचविवर्जयेत् इतिदे
वलीयोनिषेधोरागप्राप्तस्नाने॥मध्यान्होत्राभिजिद्वेला॥पंचमभागेभोजनस्यवक्ष्यमाण
त्वात् ॥योगियाज्ञवल्क्यः॥उभेसंध्येचस्नातव्यंब्राह्मणैर्गृहमाश्रितैः ॥ तिसृष्वपिचसंध्या
सुस्नातव्यंचतपस्विना॥उभेसंध्येचप्रातर्मध्यान्हेचतपस्विनावनस्थेनयतिनाच॥बौधाय
नः ॥अम्भोवगाहनंस्नानंविहितंसार्ववर्णिकम् ॥विष्णुः॥ उद्धृताद्भूमिष्ठमुदकंपुण्यंस्थाव
रात्प्रस्त्रवंतस्मान्नादेयंतस्मादपिसाधुगृहीतंसर्वतएवगाङ्गम् ॥शंखः॥अद्भिर्गात्राणिशुध्यं
तितीर्थस्नानाद्भवेत्फलं ॥ मनुः॥ नदीषुदेवखातेषुतडागेषुसरःसुच ॥स्नानंसमाचरेन्नित्यं
गर्तप्रस्त्रवणेषुच ॥ देवखातेषुसूर्य्यादिदेवसमीपखातेषुप्रस्त्रवणेषुनिर्झरेषु नित्यमित्यु
क्तेर्जीवदधिकारः ॥सवस्त्रोऽहरहराप्लवतेतिसांख्यायनगृह्यात् ॥ अथातोनित्यस्नान
मितिकात्यायनाच्च ॥एवंचनित्यस्नानेनद्यादीनामंगत्वं॥त्रिरात्रफलदानद्यइत्यपिनित्य
स्नानप्रकरणस्थवचनाद्गुणफलतापि ॥ प्रकरणान्तरोक्ततीर्थस्नानंस्वर्गादिफलकंसाधि

कारमेवेति ॥ छन्दोगपरिशिष्टे ॥ धनुःसहस्राण्यष्टौचगतिर्यासांनविद्यते॥ नतानदीशब्द
वहागर्तास्ताःपरिकीर्तिताः॥ धनुर्हस्तचतुष्कं॥तथा॥पञ्यद्वयंश्रावणादिसर्वानद्योरजस्व
लाः ॥ तासुस्नानंनकुर्वीतवर्जयित्वासमुद्रगाः ॥ उपाकर्मणिचोत्सर्गेप्रेतस्नानेतथैवच ॥
चंद्रसूर्यग्रहेचैवरजोदोषोनविद्यते ॥ पञ्योमासः ॥ मनुः ॥ नस्नानमाचरेद्भुक्त्वानातुरो
नमहानिशि ॥ नवासोभिःसहाजस्रंनाविज्ञातेजलाशये ॥ नभुक्त्वानमहानिशीतिनिषेध
श्चांडालादिस्पर्शनिमित्तकस्नानेनास्ति॥नाप्रयतःक्षणमपितिष्ठेदितिबोधनात्॥महानि
शारात्रिमध्यस्थप्रहरद्वयं॥नातुरइतिरोगस्यस्नानसंवर्द्धनीयत्वेनदृष्टार्थत्वात्॥अविज्ञाते
ऽगाधतयानक्रादिरहिततयाच॥कृत्रिमेप्रतिष्ठिताप्रतिष्ठितत्वाभ्यामपि॥ देवलः॥ राहुदर्श
नसंक्रांतिविवाहात्ययवृद्धिषु ॥ स्नानदानादिकंकुर्य्यान्निशिकाम्यव्रतेषुच ॥ अत्ययोमृ
तकं वृद्धिः पुत्रजन्मादिः ॥ वामनपुराणे॥ स्नायाच्छिरःस्नानतयाननित्यंनाकारणंचैवस
दानिशासु ॥ ग्रहोपरागंस्वजनातियातंमुक्त्वाचजन्मर्क्षगतंशशाङ्कम् ॥ शिरःस्नानतया

शिरोनैक्यार्थं वैधंतुनित्यस्नानंकर्त्तव्यमेव ॥ अकारणमित्यनेनरागप्रयुक्तजलक्रीडादि
निवृत्तिः॥आपस्तंबः॥ सशिरोवमज्जनमप्सुवर्जयेदस्तमितेचस्नानं॥ सशिरोवमज्जनंशि
रोनैक्यार्थं हरिहरेणअशिरोवमज्जनमितिपठितं॥गात्रप्रक्षालनमात्रमपिजलंप्रविश्यन
कर्त्तव्यमितिव्याख्यातम्॥अत्रचास्तमितमात्रेस्नाननिषेधात्॥नरात्रौनमहानिशीतिदो
षातिशयार्थंदृष्टार्थंवा ॥ तत्रविष्णुः॥ नसंध्यायांरागप्राप्तजलक्रीडादिस्नाननिषेधोयंवैध
स्यसंध्यायांविधानात् ॥ हारीतः ॥ नचत्वरोपद्वारयोःस्नायात् ॥ शंखलिखितौ ॥ ननग्नः
स्नायात् ॥ अत्रनग्नस्नाननिषेधात् पूर्वंचनवासोभिरितिवस्त्रबहुत्वनिषेधात्॥ एकवस्त्र
त्वेद्विवस्त्रत्वंचाविरोधि ॥ नार्द्रमेकंचवसीतेतिपुरुषार्थत्वान्नस्नानविधौदोषमावहति ॥ अ
थवा ॥ होमदेवार्चनाद्यासुक्रियास्वाचमनेतथा॥नैकवस्त्रःप्रवर्त्तेतद्विजवाचनिकेजपे॥इ
तिविष्णुपुराणे एकवस्त्रतानिषेधाद्विवस्त्रतानियमएव ॥ अत्रव्यासः ॥ नभुक्त्वालंकृ
तोरोगी ॥ शंखलिखितौ ॥ अमेध्योदकंपरिहरेत् तथा नसमुद्रोदकमवगाहेत् ॥

योगियाज्ञवल्क्यः ॥ प्रभूतेविद्यमानेतुविमलेतुमनोहरे ॥ नाल्पोदकेद्विजःस्नायान्नदीं
चोत्सृज्यकृत्रिमे ॥ विष्णुः ॥ नपरनिपानेषुस्नानमाचरेत् ॥ आचरेद्वापञ्चपिण्डानुद्धृ
त्यापदि ॥ परनिपानेषुपरकृतजलाशयेषु ॥ पञ्चपिण्डाननुद्धृत्यनस्नायात्परवारिणि ॥
निपानकर्त्तुःस्नात्वातुदुष्कृतांशेनलिप्यतइतिमनुस्मरणात् ॥ पञ्चपिंडानिति सेतुकूप
व्यतिरिक्तजलाशये ॥ निरुद्धासुचमृत्पिंडान्कूपात्तुत्रीन्घटांस्तथेतिबौधायनदर्शनात्
निरुद्धासुचनस्नायादंशभाक्तत्रसेतुकृत् ॥ तत्रप्रांचः ॥ अप्रतिष्ठितमात्रेतुपिंडोद्धारस्त
स्यैवपरकीयत्वादित्याहुस्तन्नेतिहरिहरादयः ॥ अप्रतिष्ठितजलत्वेनतत्रस्नानाभावात् प
रस्वोपयोगेचौर्यापत्तेर्मन्वादौपरकृतस्वरूपस्यपरकीयत्वावगमाच्च॥योगि याज्ञवल्क्यः॥
अग्राह्याआगताआपोनद्याःप्रथमवेगिकाः ॥ प्रक्षोभिताश्चकेनापियाश्चतीर्थाद्विनिःसृ
ताः ॥ गंगादिप्रवाहाद्विच्छिन्नाः ॥ तथा पादेनपाणिनावापियष्ट्यावस्त्रेणचोदकम् ॥ ना
हन्यान्नापवदेन्नचप्रक्षोभयेद्बुधः ॥ शंखलिखितौ ॥ नाप्सुमेहेन्नोद्धर्षणंकुर्यात् ॥ उ

द्वर्षणंगात्रमलप्रक्षालनम् ॥ बौधायनः ॥ आपोदेवगृहंगोष्ठंयत्रसन्तिचब्राह्मणाअप्रा
क्षाल्यपादौनांतः प्रवेष्टव्यम् ॥ देवलः ॥ ननदीषुनदींब्रूयात्पर्वतेषुचपर्वतं ॥ नान्यत्प्रशं
सेत्तत्रस्थस्तीर्थेष्वायतनेषुच ॥ अंगिराः ॥ विनादर्भैश्चयत्स्नानंयच्चदानंविनोदकम् ॥
असंख्यातंतुयज्जप्तंतत्सर्वंनिष्फलंभवेत् ॥ नस्नानवर्णकयोरग्रंप्रयच्छेतान्यत्रदेवगुरुब्रा
ह्मणेभ्यः ॥ जाबालिः ॥ त्रयोदश्यांतृतीयायांदशम्यांचविशेषतः ॥ शूद्रविट्क्षत्रियाःस्ना
नंनाचरेयुः कथंचन ॥ यथासंख्यमत्र ॥ आपस्तंबः ॥ अस्पृश्यस्पर्शनेवांतेअश्रुपातेक्षुरे
भगे ॥ स्नानंनैमित्तिकंकार्यंदैवपित्र्यविवर्जितम् ॥ दैवपित्र्यविवर्जितमितिनित्यंनैमित्ति
कंकाम्यंत्रिविधंस्नानमुच्यते ॥ तर्पणंतुभवेत्तस्यअंगत्वेनप्रकीर्त्तितमितिब्रह्मपुराणवच
नात्सामान्यतः प्रसक्तस्यतर्पणस्यचव्यावृत्तिः ॥ यमः ॥ अजीर्णेऽभ्युदितेवांतेश्मश्रुकर्म
णिमैथुने ॥ दुःस्वप्नेदुर्जनस्पर्शेस्नानमात्रंविधीयते ॥ अभ्युदितेऽशुद्धोद्वारादिनाभिव्य
क्ते एतच्चोत्तरकालस्नानप्राप्त्यर्थं अजीर्णावस्थायांनिषेधात् अभ्युदितेवांतेइतिसंबंधेप

युंषितेवांतेइतिविशेषः ॥ दुर्जनोत्रचांडालादिःमात्रपदेनसर्वांगव्यावृत्तिः तस्मादप्रायत्य
निमित्तेस्नानेमज्जनमात्रेणशुद्धिः ॥ गौतमः ॥ पतितचांडालसूतिकोदक्याशवस्पृष्टित
त्स्पृष्ट्युपस्पर्शनेसचैलोदकोपस्पर्शनाच्छुद्धोभवति ॥ अत्रचशवस्पर्शिनस्तत्स्पर्शिनश्च
स्पर्शेस्नानविधानात् ॥ उपस्पृश्याशुचिस्पृष्टंतृतीयंवापिमानवः॥हस्तौपादौचतोयेनप्र
क्षाल्याचम्यशुद्ध्यतीतिदेवलवचनंपतितादिस्पर्शिस्पर्शेसंकोचनीयं तत्स्पृष्टिपदंपतिता
दिस्पर्शिनोप्याहेतिकेचित् तदयुक्तं द्वंद्वद्वयगौरवात् एकद्वंद्वेचसन्निहितपरत्वमेवभेदः॥उ
दकोपस्पर्शनंस्नानं॥बौधायनः॥चांडालेनसहाध्वगमनेसचैलस्नानं॥पराशरः॥चैत्यवृक्ष
श्चितिर्यूपश्चांडालः सोमविक्रयी॥एतांस्तुब्राह्मणःस्पृष्ट्वासचैलोजलमाविशेत्॥सचैलोय
द्वस्त्रधरःसन्स्पृष्टस्तद्वस्त्रसहितइत्यर्थः ॥ जलमाविशेदितिवारुणस्नानोपलक्षणं ॥ तथा
श्वकाकैरवलीढस्यनखैर्विदलितस्यच॥ अद्भिःप्रक्षालनंशौचमग्निनाचोपचूडनम् ॥ इयंच
स्नानंविनैवशुद्धिः शिरोऽव्यतिरिक्तगात्रोपघाते॥उपचूडनंज्वालयास्पर्शनं॥च्यवनः॥ श्वा

नंश्वपाकंप्रेतधूमंदेवद्रव्योपजीविनंग्रामयाजकंयूपंचितिंचितिकाष्ठंमद्यंमद्यभांडंसस्नेहं
मानुषास्थिशवस्पृष्टंरजस्वलांमहापातकिनंशवंस्पृष्ट्वासचैलमंभोवगाह्यउत्तीर्याग्निमुप
स्पृशेद्गायत्र्यष्टशतंजपेत् घृतंप्राश्यपुनःस्नात्वात्रिराचामेत् ॥ अग्निस्पर्शनादिकामकृते
स्मृत्यंतरेस्नानमात्रविधानात्॥आपस्तंबः॥एकांशाखांसमारूढश्चांडालादिर्यदाभवेत्॥
ब्राह्मणस्तत्रआसीनःस्नानेनशुचितामियात् ॥ कालिकापुराणे॥ स्पृष्ट्वारुद्रस्यनिर्माल्यं
सवासाह्याप्लुतःशुचिः ॥ एतदपनीतनिर्माल्येबोद्धव्यं ॥व्यासः॥ भासवानरमार्जारखरो
ष्ट्राणांशुनांतथा ॥ सूकराणाममेध्यंचस्पृष्ट्वास्नायात्सचैलकम् ॥ लघुहारीतः ॥ श्वविष्ठां
काकविष्ठांवाकंकगृध्रनरस्यच ॥ अधोच्छिष्टंतुसंस्पृश्यसचैलोजलमाविशेत् ॥ अधोच्छि
ष्टंमूत्रोत्सर्गेणाशुद्धम् ॥देवलः॥ मानुषास्थिवसांविष्ठामार्त्तवंमूत्ररेतसी ॥ मज्जानंशोणितं
वापिपरस्ययदिसंस्पृशेत्॥स्नात्वापमृज्यलेपादीनाचम्यशुचितामियात्॥तान्येवस्वानि
संस्पृश्यपूतःस्यात्परिमार्जनात् ॥ तदनंतरमाचमनंप्राप्तमेव ॥ विष्णुः॥ नाभेरधस्ता

त्रबाहुषुचकायिकैर्मलैः सुराभिर्मद्यैर्वाचोपहतोमृत्तोयैस्तदंगंप्रक्षाल्यातंद्रितः शुद्धोभव
ति अन्यत्रोपहतस्तदंगंमृत्तोयैःप्रक्ष्याल्यस्नानेनशुद्धोभवति चक्षुष्युपहतेउपोष्यस्नात्वा
पंचगव्येनशुद्ध्यति दशनच्छदोपहतश्च॥ प्रबाहुर्हस्तः ॥ अतंद्रितइत्याचमनप्राप्त्यर्थम् ॥
अन्यत्रउपहतउक्तेतरकायेस्पृष्टः॥ अंगिराः ॥ इंद्रियेषुप्रविष्टंस्यादमेध्यंयदिकर्हिचित् ॥
मुखेपिऽसंस्पर्शगतंस्नानंतत्रविधीयते ॥ शंखः ॥ रथ्याकर्दमतोयेनष्ठीवनाद्येनचाप्यथ ॥
नाभेरूर्ध्वंनरःस्पृष्टःसद्यःस्नानेनशुद्ध्यति ॥ ब्रह्मपुराणे ॥ उच्छिष्टेनाथविप्रेणविप्रःस्पृ
ष्टस्तुतादृशः ॥ उभौस्नानंप्रकुरुतः सद्यएवसमाहितौ ॥ तथा ॥ मानुषास्थितुसंस्पृश्यद
ग्धंसस्नेहमेववा ॥ स्नायादगांसंस्पृशेत्सूर्यंपश्येद्विष्णुमनुस्मरेत् ॥ दग्धस्पर्शेकामकृते
स्नानं आचम्यैवचानिःस्नेहमितिमनुवचनात् ॥ मनुः ॥ वांतोविरक्तःस्नात्वातुघृतप्राश
नमाचरेत् ॥आचामेदेवभुक्तान्नंस्नानंमैथुनिनःस्मृतम् ॥भुक्त्वान्नंवांतइत्यर्थः॥ तेनसद्यो
वमनेआचमनमात्रम् ॥ एवकारेणस्नाननिवृत्तिः॥मैथुनिनऋताविविशेषः॥बृहस्पतिः॥

पतितंसूतिकामंत्यंशवंस्पृष्ट्वातुकामतः॥स्नात्वासचैलंस्पृष्ट्वाग्निंघृतंप्राश्यविशुद्ध्यति ॥मनुः ॥ अनुगम्येच्छयाप्रेतंज्ञातिमज्ञातिमेववा ॥स्नात्वासचैलः स्पृष्ट्वाग्निं घृतं प्राश्यविशुद्ध्यति ॥ शुद्ध्येदित्यनुवृत्तौविष्णुः ॥ सर्वस्यैव प्रेतस्य बांधवैः सहाश्रुपातंकृत्वास्नानेन अकृतेऽस्थिसंचयनेसचैलस्नानेन ॥ देवलः ॥ श्वपाकंपतितंव्यंगमुन्मत्तंशवहारकम् ॥ सूतिकांसूयिकांनारींरजसाचपरिप्लुताम् ॥ श्वकुक्कुटवराहांश्चग्राम्यान्संस्पृश्यमानवः ॥ सचैलंसशिरःस्नात्वातदानीमेवशुद्ध्यति ॥ श्वादिभिःशिरःस्पर्शेस्नानं गात्रांतरस्पर्शेक्षालनाचमनमात्रम् ॥ तथाच शातातपः ॥ रजकश्चर्मकृच्चैवव्याधजालोपजीविनौ ॥ चैलनिर्णेजकश्चैवनटःशैलूषकस्तथा ॥ मुखेभगस्तथाश्वाचवनितासर्ववर्णगा ॥ चक्रीध्वजी वध्यघातीग्रामकुक्कुटशूकरौ ॥ एभिर्यदंगंसंस्पृष्टंशिरोवर्जंद्विजातिषु ॥ तोयेनक्षालनंकृत्वाआचांतः शुचितामियात् ॥ चक्रीतैलिकः ध्वजीशौंडिकः ॥ विष्णुः ॥ भक्ष्यवर्जंपंचनखंशवंतदस्थिसस्नेहं ॥ ब्रह्मपुराणे ॥ उदक्यांसूतिकांचैवश्वानमंत्यावसायिनं ॥ नग्ना

दीन्मृतहारांश्चस्पृष्ट्वाशौचंविधीयते ॥ स्नात्वासचैलोमृद्भिस्तुशुद्ध्येद्द्वादशभिर्नरः ॥ एत
देवभवेच्छौचंमैथुनेवमनेतथा ॥ नग्नादयःपाखंडाः मृद्भिःसूतिकादिभिःस्पृष्टमंगंप्रक्षाल
येदितिशेषः ॥ एतदनंतरंस्नात्वेति योज्यम् ॥ मार्कंडेयपुराणे ॥ अभोज्यंसूतिकांपंढमा
र्जाराखुश्वकुक्कुटान् ॥ पतिताविद्धचाण्डालमृतहारांश्चधर्मवित् ॥ संस्पृश्यशुध्यतिस्ना
नादुदक्याग्रामशूकरौ ॥ अत्रमार्जारस्पर्शेस्नानविधानान्मार्जारश्चसदाशुचिरितिवि
ष्णुस्मृतिर्भांडादिविषया ॥ अथवा मार्जारकर्मकेस्पर्शेस्नानविधिः ॥ मार्जारकर्तृके
स्पर्शेदोषाभावइतिव्यवस्था ॥ चाण्डालादिस्पर्शेतुनदोषविशेषव्यवस्था प्रमाणाभावा
त् द्वैविध्याश्रवणाच्चेति ॥ लघ्वास्तम्बः ॥ यद्विष्ठितंकाकबलाकिकाभ्याममेध्यलिप्तं
तुभवेच्छरीरम् ॥ श्रोत्रेमुखेनप्रविशेतसम्यक्स्नानेनलेपोपहतस्यशुद्धिः ॥ अस्यायमर्थः ॥
काकबलाकिकाभ्यांयदुपरिविष्ठाकृतातच्छरीरमशुचिलिप्तंभवति तच्चाशुचिर्यदिश्रोत्र
मुखयोर्नप्रविशतितदास्नानेनैवशुध्यति ॥ एवंमुखादिप्रवेशेप्रायश्चित्तान्तरंसूचितम् ॥

॥ व्याघ्रपादः ॥ चाण्डालादिनासंस्पृष्टःस्नानंकृत्वाविशुध्यति ॥ हारीतः ॥ श्वपचमूषक
प्रेतहारकशवान्संस्पृश्यदेवीरापइत्येताभिरन्तर्जलेस्नातःपूतोभवति ॥ अजीर्णवान्त
श्मश्रुकर्मायोनिपशुदिवामैथुनेच ॥ सुमन्तुः ॥ अनुदकमूत्रपुरीषकरणेनखकेशरुधिरस्रा
वसदुष्यति ॥ तंस्पृष्ट्वान्योनदुष्येतसर्वद्रव्येष्वयंविधिः ॥ द्रव्येषुमध्वादिषु ॥ अशुचिनर
रः॥ स्नात्वास्नात्वास्पृशेत्क्षिप्रंततःशुध्येत्सआतुरः ॥ पाराशरः॥ अस्तंगतेयदासूर्येचांडा
लंपतितांस्त्रियम् ॥ सूतिकांस्पृशतश्चैवकथंशुद्धिर्विधीयते ॥ जातवेदःसुवर्णंचसोममार्गेत
थैवच ॥ ब्राह्मणानुमतेचैवदृष्ट्वास्नात्वाचशुद्ध्यति ॥ आचांतमनुगत्वानिशिस्नानंनविद्य
ते ॥ स्नानमाचमनंप्रोक्तंदिवोद्धृतजलेनच ॥ जातवेदाःअग्निः सोममार्गेआकाशम् ब्रा
ह्मणानुमतेस्नात्वाऽग्न्यादिकंस्पृष्ट्वाशुद्ध्यतीत्यर्थः॥आचांतमाचमनं अनुगत्वाजलाशयम्

शनेसद्यः स्नानंघृतकुशहिरण्योदकप्राशनञ्च ॥ शातातपः ॥ अशुचिंसंस्पृशेद्यस्तुएकए
स्पृष्टस्पर्शिनस्तत्स्पर्शिनश्चाचमनंपूर्वोक्तम्॥यमः॥ आतुरस्नानसंप्राप्तौदशकृत्वस्त्वनातु

प्रविश्यनिशीत्युभयत्रयोज्यम् ॥ शंखः ॥ नित्यंनैमित्तिकंचैवक्रियांगंमलकर्षणम् ॥ ती
र्थाभावेपिकर्त्तव्यमुष्णोदकपरोदकैः ॥ नित्यंप्रातःस्नानपरं नैमित्तिकंचांडालादिस्पर्श
निमित्तं क्रियांगंजपादिकर्माधिकारहेतुः मलकर्षणमभ्यंगपूर्वकं ज्योतिःशास्त्रोक्तपुण्य
स्नानादिकाम्यं ॥ नद्याद्याधारकफलार्थं क्रियास्नानंचादायशंखेनषोढास्नानमुक्तं अत्र
क्रियास्नानएवतेनधर्माविहिताः ॥ प्रातःस्नाने यथाहानितथाप्रातरित्यातिदेशाद्धर्माअह
रहःस्नानेकात्यायनेनोक्ताः॥ स्नानांतराणिनिमज्जनमात्ररूपाणि धर्मसंबंधेप्रमाणाभा
वात्॥नचातिदेशःसर्वेषांसधर्मकृत्येविशेषोद्देशेनधर्मविधिवैफल्यात्॥नचगुणफलेविशेष
स्तदभावात् ॥ अपिचनैमित्तिकेधर्माभावउक्तएव॥काम्यपुष्यस्नानादिमलापकर्षणयो
स्तुलौकिकयोर्नालौकिककर्मांगमितिदक्षसूत्रेसाधितत्वान्नालौकिकांगसंबंधः ॥ क्रियांग
स्नानेप्यद्भिरेवशुद्ध्यभिधानाद्धर्माभावः॥ अतएवहेत्वंतरप्रयुक्तेनिमज्जनमात्रेऽपिक्रिया
स्नानस्यपृथगनुष्ठानं ॥ हरिहरोपिक्रियास्नानप्रातःस्नानयोरेवधर्मानाह॥क्रियास्नानं

किंत्विदंफलार्थितयाकथितमप्यहरहःस्नानादभिन्नं तत्रापिपापक्षयरूपस्यसत्वादिति भट्टनयेनविशेषमाह ॥ एवंस्नानानुकल्पेपिश्रुतमात्रमनुष्ठेयं ॥ स्नानानुकल्पमाहयोगि याज्ञवल्क्यः ॥ कालदोषादसामर्थ्यान्नशक्नोतियदाह्यसौ ॥ तदास्मृत्वाऋषिभ्यस्तुमंत्रै र्दृष्टंतुमार्जनम् ॥ शन्नआपस्तुद्रुपदाआपोहिष्ठाघमर्षणम् ॥ एतैश्चतुर्भिर्मंत्रैस्तुमंत्रस्ना नमुदाहृतं ॥ कालदोषोऽतिवृष्ट्यादिः ॥ तेनरोगहीनोप्यतिवृष्ट्यादौस्नानजनयितव्यरो गसंभावनायामाप्लवंस्नानंनकुर्यात् ॥ असामर्थ्यमुत्पन्नरोगत्वम् ॥ अप्रायत्येसमुत्पन्ने स्नानमेवसमाचरेत् ॥ स्नानमेवेतिवारुणस्नानपरम् ॥ जाबालिः ॥ अशिरस्कंभवेत्स्नानं स्नानाशक्तौतुकर्मिणां ॥ आर्द्रेणवाससावापिमार्जनंदैहिकंविदुः ॥ हारीतः ॥ आग्नेयंभ स्मनास्नानमद्भिर्वारुणमुच्यते ॥ आपोहिष्ठेतिचब्राह्मंवायव्यंगोरजःस्मृतं ॥ यत्तुसातपव र्षेणस्नानंदिव्यमिहोच्यते ॥ एतैस्तुमंत्रतः स्नात्वातीर्थानांफलमाप्नुयात् ॥ मंत्रतइतिन चस्वपिस्नानेषुमंत्रविधायकं ॥ ब्राह्मवारुणयोर्मंत्रस्यप्राप्तत्वात् ॥ किंतुतदनुवादकमेवफ

लसंबंधपरत्वात् ॥ अत्रयोगियाज्ञवल्क्येनमृदालंभस्तुपार्थिवमितिमानसंविष्णुचिंतन
मितिचस्नानद्वयमाधिकमुक्तं ॥ कात्यायनः ॥ अथातोनित्यस्नानंनद्यादौमृद्गोमयकुशति
लसुमनसआहृत्योदकांतंगत्वाशुचौदेशेप्रतिष्ठाप्यप्रक्षाल्यपाणिपादं कुशोपग्रहोबद्धशि
खीयज्ञोपवीत्याचम्य उरुंहीतितोयमामंत्र्यावर्त्तयेद्येतेशतमिति सुमित्रियानइत्यपोंज
लिमादाय दुर्मित्रियाइतिद्वेष्यंप्रतिनिषिंचेत्कटिं वस्त्यूरुजंघे चरणौ करौमृदा त्रिस्त्रिःप्र
क्षाल्याचम्य नमस्योदकमालभेदंगानि मृदेदंविष्णुरितिसूर्य्याभिमुखो निमज्जेदापोअ
स्मानितिस्नात्वोदिदाभ्यइत्युन्मज्ज्योन्मज्याचम्यगोमयेनविलिंपेन्मानस्तोकइति ततो
भिषिंचेदिमंमेवरुणइति चतसृभिर्मापउद्दुत्तममुंचंत्ववभृथेत्यंते चैतान्निमज्योन्मज्याचम्य
दर्भैःपावयेदापोहिष्ठेति तिसृभिरिदमापोहविष्मतीर्देवीरापइति द्वाभ्यामापोदेवाद्रुपदा
दिवशन्नोदेवीरपाःस्समपोदेवीपुनंतुमेति नवभिश्चित्पतिर्मेत्योंकारेणव्याहृतिभिर्गाय
त्र्यादावंतेचांऽतर्जलेऽघमर्षणंत्रिरावर्त्तयेद्द्रुपदांवा आयंगौरितिवातृचं प्राणायामंवा स

शिरओमितिवाविष्णोर्वास्मरणं ॥ अथेतितृतीयभागानंतर्य्यार्थं ॥ यतः स्नानेनकर्माधि
कारःअतोनित्यमहरहःस्नानंकर्त्तव्यमित्यर्थः॥ यदाहविष्णुः॥ स्नातोऽधिकारीभवतिदै
वेपित्र्येचकर्मणि ॥ पवित्राणांतथाजप्येदानेचविधिदर्शिते॥नन्वहरहःस्नानस्यनित्यत्वब
लादेवकर्त्तव्यतासिद्धौअतइति हेत्वभिधानंव्यर्थं॥मैवं प्रासंगिकीकर्माधिकारसिद्धिरित्ये
वंपरत्वात् ॥ नचनित्यस्नानंप्रातःस्नानं अस्नातोहिपुमान्नार्होजप्याग्निहवनादिषु॥प्रा
तःस्नानंतदर्थंतुनित्यस्नानमुदाहृतमितिशंखस्मरणादितिवाच्यं ॥ स्नानोत्तरंकात्यायने
नमध्याह्नकृत्यस्याभिधानात् ॥ अतएवकामधेन्वादौचतुर्थभागकृत्येलिखितं॥मृदादौऋ
ष्यंतरोक्तविशेषः प्रयोगादेवाधिगंतव्यः ॥ अत्रयोगियाज्ञवल्क्येनत्रिधास्थापितमृद्भोम
याभ्यांमध्यमाधमोत्तमांगप्रक्षालनमुक्तंतत्कात्यायनसूत्रविरोधान्नग्राह्यं ॥एवमन्यदप्य
धिकमत्रकल्पोक्तंत्यक्तव्यं॥आचमननिमित्तपातेतुनसौत्रक्रमविरोधइतिदर्शितंशिष्टाको
पे॥ कुशोपग्रहःकुशहस्तः उपगृह्यतेऽनेनेत्युपग्रहोहस्तः॥यज्ञोपवीतीतिपुरुषार्थविधिप्रा

चेत् ॥ ततः कटिंबस्त्यूरुजंघेचरणौकरौप्रत्येकंमृत्तोयाभ्यांत्रिस्त्रिःप्रक्षाल्य एकंपादंजले
ऽपरंचस्थलेनिधायाचामेत् ॥ ततउदकंनमस्कृत्यॐइदंविष्णुर्व्विचक्रमेत्रेधानिदधेपदं ॥
समूढमस्यपा᳚सुरेइतिमृत्तिकयांगानिसंस्पृश्य नाभिमात्रंजलंप्रविश्य ॐआपोअस्मा
न्मातरःशुंधयंतुघृतेननोघृतप्वःपुनंतु ॥ विश्व᳚हिरिप्रंप्रवहंतिदेवीरितिमंत्रेणसूर्य्या
भिमुखोनिमज्जेत् ॥ततः स्नात्वा ॐउदिदाभ्यःशुचिरापूतएमिइतिनिमज्ज्योन्मज्याचम्य
ॐमानस्तोकेतनयेमानआयुषिमानोगोषुमानोअश्वेषुरीरिषः ॥ मानोव्वीरानुद्रभामितो
व्वधीर्हविष्मंतःसदमित्वाहवामहे इतिमंत्रेणगोमयेनांगानिविलिंपयेत् ॥ततःॐइमंमेव्व
रुणश्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचके ॥ ॐतत्त्वायामिब्रह्मणाव्वंदमानस्तदाशा
स्तेयजमानोहविर्भिः ॥ अहेडमानोव्वरुणेहबोध्युरुश᳚समानआयुःप्रमोषीः ॥ ॐत्व
न्नोअग्नेव्वरुणस्यविद्वान्देवस्यहेडोअवयासिसीष्ठाः ॥ यजिष्ठोव्वह्नितमःशोशुचानोवि
श्वाद्वेषा᳚सिप्रमुमुग्ध्यस्मत् ॥ ॐसत्वन्नोअग्नेव्वमोभवोतीनेदिष्ठोअस्याउषसोव्युष्टौ ॥

तेयज्ञोपवीतित्वेयज्ञोपवीतीतिद्वितीयवस्त्रधारणार्थमितिकात्यायनभाष्यं तदयुक्तं परि
संख्यापत्तेः ॥ तस्मादेकत्वर्थश्रवणंप्रकरणात् ॥ तेनदैवाद्विनष्टेपियज्ञोपवीतेतदुत्पाद्य
स्नानमितिसिद्धयति ॥ एवमनियतकेशवेशाःसर्वेषांमुक्ताशिखावर्जनमितिनिषेधात्पुरुषा
र्थतः शिखाबंधनलाभेबद्धशिखीतिक्रत्वंगतालाभार्थं ॥ द्वेष्यंप्रतिनिषिंचेत् द्वेष्यंबुद्धिस्थी
कृत्ययस्यांदिशिद्वेष्यस्तिष्ठतितस्यांक्षिपेदित्यर्थः ॥नमस्यनमस्कृत्यआलभेत्स्पृशेत्॥न
द्यादावित्युपक्रम्यसूर्याभिमुखइत्यभिधानात्नद्यांस्त्रवत्सुचस्नायात्प्रतिस्त्रोतः स्थितोद्वि
जइतिनरसिंहपुराणेविषयांतरेस्नात्वेतिश्रवणात् पुनर्निमज्जनंनिमज्योन्मज्योतिचाऽपर
मितिमज्जनत्रयासिद्धिः ॥ अभिषिंचेत् हस्तेनशिरसिजलंक्षिपेत् अंतेचैतद्वक्ष्यमाणमार्ज
नांतेपिउक्तमंत्रकरणाभिषेककर्मकुर्य्यादित्यर्थः तथैवप्रकृतत्वात् ॥ नत्वेतन्मंत्रजातंवक्ष्य
माणमार्जनांतेमार्जनएवेतिकल्पना ॥ तत्राभिषेकोमार्जनं च प्रत्यृचमेवेतिलिंगात् ॥ चत
सृभिस्तिसृभिरित्यादित्वनेकत्वप्राप्त्यर्थमेवनतुमिलितविनियोगार्थमपि ॥दर्भैरितिबहुत्वं

अवयक्ष्वनोऽवरुण ँरराणोऽवीहिमृडीक ँसुहवोनएधि ॥ ॐमापोमौषधीर्हि ँसीर्द्धाम्नो
धाम्नोराजंस्ततोऽवरुणनोमुञ्च यदाहुरघ्न्याइतिऽवरुणेतिशपामहेततोऽवरुणनोमुञ्च ॥
ॐ उदुत्तमंऽवरुणपाशमस्मदवाधमंविमध्यम ँश्रथाय ॥ अथाऽवयमादित्यव्रतेतवाना
गसोअदितयेस्याम ॥ ॐ मुञ्चन्तुमाशपथ्यादथोऽवरुण्यादुत ॥ अथोयमस्यपड्वीशा
त्सर्वस्माद्देवकिल्बिषात् ॥ ॐ अवभृथनिचुंपुणनिचेरुरसिनिचुम्पुणः ॥ अवदेवैर्देवकृत
मेनोयासिषमवमर्त्यैर्मर्त्यकृतम्पुरुराऽणोदेवरिपस्पाहि ॥ इत्यष्टभिर्मंत्रैर्हस्तेनप्रत्येकंशि
रसिजलम्प्रक्षिपेत् ॥ ततोवहतिजलेप्रवाहाभिमुखःस्थिरःसूर्याभिमुखोमौनीशरवत्त्रिर्नि
मज्जेत् ततआचम्य ॐ कारव्याहृतिगायत्रीभिरापोहिष्ठेत्यादितिसृभिः ॥ ॐ इदमापः
प्रवाहतावद्यञ्चमलञ्चयत् ॥ यच्चाभिदुद्रोहानृतंयच्चशेपेअभीरुणम् ॥ आपोमातस्मादे
नसः पवमानश्चमुञ्चतु ॐ हविष्मतीरिमा आपोहविष्माँआविवासाति॥हविष्मान्देवोअ
ध्वरोहविष्माँअस्तुसूर्यः ॥ ओंदेवीरापोअपान्नपाद्योवऊर्मिर्हविष्यइंद्रियावान्मादिंतमः

॥ तन्देवेभ्योदेवत्रादत्तशुक्रपेभ्योयेषांभागस्थस्वाहा॥ ॐ कार्षिरासिसमुद्रस्यत्वाक्षित्या
उन्नयामि ॥ समापोअद्भिरग्मतसमोषधीभिरोषधीः ॥ ॐ अपोदेवामधुमतीरगृभ्ण
न्नूर्ज्जस्वतीराजस्वश्चितानाः ॥ याभिर्मित्रावरुणावभ्यषिंचन्याभिरिंद्रमनयन्नत्यरातीः॥
ॐ द्रुपदादिवमुमुचानः स्विन्नःस्नातोमलादिव ॥ पूतंपवित्रेणेवाज्यमापः शुन्धन्तुमैन
सः॥ ॐ शन्नोदेवीरभिष्टयआपोभवन्तुपीतये॥ शंयोरभिस्त्रवन्तुनः ॥ ॐअपा॑ꣳरसमु
द्वयस ꣳसूर्येसन्तꣳसमाहितम्॥ अपा॑ꣳरसस्ययोरसस्तंवोगृण्हाम्युत्तमम्॥ ओंअपोदे
वीरुपसृजमधुमतीरयक्ष्मायप्रजाभ्यः॥ तासामास्थानादुज्जिहतामोषधयः सुपिप्पलाः
॥ ॐपुनन्तुमापितरः सोम्यासः पुनन्तुमापितामहाः पुनन्तुप्रपितामहाः ॥ पवित्रेणश
तायुषा॥ पुनन्तुमापितामहाः॥ पुनन्तुप्रपितामहाः॥ पवित्रेणशतायुषा॥ विश्वमायुर्व्य
श्नवै ॥ ओंअग्नआयूꣳषिपवसआसुवोर्जमिषञ्चनः ॥ आरेबाधस्वदुच्छुनाम्॥ ॐ पुन
न्तुमादेवजनाः पुनन्तुमनसाधियः॥ पुनन्तुविश्वाभूतानिजातवेदःपुनीहिमा ॥ ॐ पवि

त्रेणपुनीहिमाशुक्रेणदेवदीद्यत् ॥ अग्नेक्रत्वाक्रतुँरनु ॥ ॐ यत्तेपवित्रमर्चिष्यग्नेऽविततमं
न्तरा ॥ ब्रह्मतेनपुनातुमा ॥ ॐ पवमानःसोअद्यनः पवित्रेणविचर्षणिः ॥ यःपोतास
पुनातुमा ॥ ॐ उभाभ्यांदेवसवितः पवित्रेणसवेनच ॥ मांपुनीहिऽविश्वतः ॥ ॐ वै
श्वदेवीपुनतीदेव्यागाद्यस्यामिमावह्व्यस्तन्वोऽवीतपृष्ठाः ॥ तयामदन्तःसाधमादेषुवय
ँस्यामपतयोरयीणाम्॥ ओंचित्पतिर्मापुनातुवाक्पतिर्मापुनातुदेवोमासवितापुनात्वछि
द्रेणपवित्रेणसूर्यस्यरश्मिभिः ॥ तस्यतेपवित्रपतेपवित्रपूतस्ययत्कामःपुनेतच्छकेयमि
तिप्रत्येकंमन्त्रैः पुनरोंकारव्याहृतिगायत्रीभिः कुशत्रयेणमार्जनंकुर्यात् ॥ ततःपूर्ववत्
इमंमेऽवरुणइत्यादिमंत्रैः शिरसिजलंनिक्षिपेत् ॥ ततऋष्यादिकंस्मृत्वामन्त्रो ऽघमर्षण
म् द्रुपदांवाआयंगौरितिवा ऋचंत्रिरावर्त्तयेत् ॥ वक्ष्यमाणमन्त्रैस्त्रिरावृत्तप्राणायामंवा
कुर्यात् ओंकारंवात्रिरावर्त्तयेत् विष्णुंवास्मरेत् ॥ योगियाज्ञवल्क्यः ॥ आचान्तःपुन
राचामेन्मंत्रवत्स्नानभोजने ॥ मन्त्रमाह ॥ द्रुपदांवात्रिरावर्त्यंतथाचैवाघमर्षणम् ॥ गा

यत्रींवात्रिरावर्त्यमहाव्याहृतिभिस्तथा ॥ सोपांशुप्रणवेनापिआपःपीताअघापहाः ॥
॥ एतच्चाचमनंमज्जनानन्तरंमार्जनात्प्राक् ॥ आचम्याप्लाव्यचात्मानंत्रिरायम्यशनैरसू
न् ॥ अथोपतिष्ठेदादित्यमित्यग्रेआप्लाव्येत्यनेनमार्जनाभिधानात् ॥ यदिस्नानापनेयम
प्रायत्यंस्यात्तदोक्तस्नानविधेः प्राङ्मलस्नानंकर्त्तव्यम् ॥ यदाह ॥ तूष्णीमेवावगाहेतय
दिस्यादशुचिर्नरः ॥ आचम्यचपुनः पश्चात्स्नानंविधिवदाचरेदिति ॥ अथपद्मपुराणी
यस्नानविधिः ॥ तत्रपद्मपुराणम् ॥ नैर्मल्यंभावशुद्धिश्चविनास्नानंनजायते ॥ तस्मा
न्मनोविशुद्ध्यर्थंस्नानमादौविधीयते ॥ अनुद्धृतैरुद्धृतैर्वाजलैःस्नानंसमाचरेत् ॥ तीर्थंप्र
कल्पयेद्विद्वान्मूलमन्त्रेणमंत्रवित् ॥ ओंनमोनारायणायेतिमूलमन्त्रउदाहृतः ॥ दर्भपा
णिस्तुविधिनाह्याचान्तःप्रयतःशुचिः ॥ चतुर्हस्तसमायुक्तंचतुरस्त्रंसमन्ततः ॥ प्रकल्प्या
वाहयेद्गङ्गामेभिर्मंत्रैर्विचक्षणः ॥ ॐ विष्णोःपादप्रसूतासिवैष्णवीविष्णुपूजिता ॥ पा
हिनस्त्वेनसस्तस्मादाजन्ममरणांतकात् ॥ तिस्रःकोट्योर्धकोटीचतीर्थानांवायुरब्रवी

त्॥ दिविभुव्यंतरिक्षेचतानितेसंतिजाह्नवि ॥ नंदिनीत्येवतेनामदेवेषुनलिनीतिच ॥ वृंदा
पृथ्वीचसुभगाविश्वकायाशिवासिता ॥ विद्याधरीसुप्रसन्नातथालोकप्रसाधनी ॥ क्षे
म्याचजाह्नवीचैवशांताशांतिप्रदायिनी ॥ एतानिपुण्यनामानिस्नानकालेप्रकीर्त्तयेत् ॥
भवेत्सन्निहितातस्यगंगात्रिपथगामिनी ॥ सप्तवाराभिजप्तेनकरसंपुटयोजितं ॥ मूर्ध्निकु
र्याज्जलंभूयस्त्रिचतुःपंचसप्तवा ॥ स्नानंकुर्यान्मृदातद्वदामंत्र्यचविधानतः ॥ अश्वक्रांतेरथ
क्रांतेविष्णुक्रांतेवसुंधरे ॥ ॥ मृत्तिकेहरमेपापंयन्मयादुष्कृतंकृतम् ॥ उद्धृतासिवराहेणकृ
ष्णेनशतबाहुना ॥ आरुह्यममगात्राणिसर्वंपापंव्यपोहय ॥नमस्तेसर्वलोकानांप्रभवारि
णिसुव्रते ॥ आदौसंध्यातर्पणादीनामितिशेषः॥सप्तवाराभिजप्तेनपूर्वोक्तमूलमंत्रेणएकव
चननिर्देशात् ॥ मूलमंत्रत्वेननिर्देशस्यसार्थकत्वाच्च ॥ नत्वेभिर्मंत्रैरित्युपक्रम्यकथितानांमं
त्राणांग्राहकइतिभ्रमःकार्यः॥स्नानंकुर्यादितिअग्रिममंत्रेणमृदमामंत्र्यतयागात्राण्यालि
प्यमज्जनंकुर्यादित्यर्थः॥अयंचस्नानविधिःसर्वशाखिसाधारणःसर्ववर्णसाधारणश्चसंको

चेत्प्रमाणाभावात्पुराणोक्तश्रवणेसर्वाधिकारश्रवणाच्च अनधीतवेदंप्रतिचायमेवस्नानावि
धिःप्रशस्तः ॥ वेदमंत्रशून्यत्वात् ॥ विष्णुः स्नातएवसोष्णीषेधौतवाससीबिभृयात् उ
ष्णीषधारणंशिरोजलप्रच्यवार्थमाचमनात्प्राक् ॥ पराशरः स्नात्वानिवस्यवासोन्यज्जं
घेप्रक्षालयेन्मृदा ॥अपवित्रीकृतेवैतुकौपीनच्युतवारिणा॥कौपीनमधोवस्त्रं ॥ योगियाज्ञ
वल्क्यः ॥ स्नात्वैवंवाससीधौतेअश्लिष्टेपरिधायच ॥ प्रक्षाल्पोरूमृदाद्भिश्चहस्तौप्रक्षा
ल्यवैतथा ॥ अभावेधौतवस्त्रस्यशाणक्षौमाविकानिच ॥ कुतपंयोगपट्टंचद्विवासायेनवै
भवेत्॥ कुतपोनेपालकंबलः ॥ जाबालिः ॥ नार्द्रमेकंचवसनंपरिदध्यात्कथंचन ॥ अत्र
सदातननिषेधबलात्पुरुषार्थता ॥ नरसिंहपुराणे ॥ नरक्तमुल्बणंवासोननीलंचप्रशस्य
ते ॥ मलाक्तंचदशाहीनंवर्जयेदंबरंबुधः ॥ ततः प्रक्षालयेत्पादौमृत्तोयेनविचक्षणः॥ उल्ब
णंव्यक्तंएतच्चरक्तविशेषणंतेनात्यंतरक्तमित्यर्थः ॥ उल्बणमंचलमितिकेचित् ॥ अत्रहा
रीतः ॥ नवासोविधुनुयान्नोत्तरीयविपर्यासंकुर्यात् ॥ विष्णुः ॥ स्नातःशिरोनावधुनेत्

नांगेभ्यस्तोयमुद्धरेत् नतैलवशेस्पृशेत् नाप्रक्षालितंपूर्वधृतंवावासोबिभृयात् नम्लेच्छां
त्यजपतितैःसहसंभाषणंकुर्यात् ॥ तैलंचवशाचतैलवशे ॥ मार्कण्डेयपुराणे ॥ संप्रमृज्या
न्नचस्नातोगात्राण्यंबरपाणिना ॥ अंबरंस्नानवस्त्रं नस्नानशाट्येतिविष्णुपुराणपाठात्
॥ एवंचनस्नात्वागात्रमवमृज्यादितिहारीतोपिस्नानशाट्यापाणिनाचविशेषणीयः॥एवं
चसमर्थंप्रतिमार्जनमात्राभावोऽसमर्थंप्रतिपाणिशाटीमार्जनाभावइतिहरिहरोक्तमश्रद्धे
यं ॥ सांख्यायनगृह्यं ॥ आप्लुत्याऽप्युदकोन्यद्वस्त्रमाच्छादयेत् ॥ अप्युदकोऽनुद्धृतोदकः॥
एषोपिपाणिवस्त्राभ्यामुद्धरणेनिषेधःकुलविशेषनियतोवागृह्योक्तत्वात्॥ अत्रशंखः॥उद
कस्याप्रदानाद्धिस्नानशाटींनपीडयेत् ॥अत्रविष्णुः॥ याम्यंहियातनादुःखंनित्यस्नायी
नपश्यति ॥ नित्यस्नानेनपूयंतेयेपिपापकृतोनराः ॥ योगियाज्ञवल्क्यः ॥ अगम्याग
मनात्स्तेयात्पापेभ्यश्चप्रतिग्रहात् ॥ रहस्याचरितात्पापान्मुच्यतेस्नानमाचरन् ॥ पापे
भ्यः पतितादिभ्यः ॥ छंदोगपरिशिष्टे ॥ संध्यालोपस्यचाकर्तास्नानशीलश्चयःसदा ॥

तंदोषानोपसर्पीतिगरुत्मन्तमिवोरगाः ॥ अथसन्ध्योपासनम् ॥ तत्रछन्दोगपरिशिष्टे ॥
॥ अतऊर्ध्वंप्रवक्ष्यामिसंध्योपासनिकंविधिं ॥ अनर्हः कर्मणांविप्रः सन्ध्याहीनोयतःस्मृ
तः ॥ संध्येतिवक्ष्यमाणप्राणायामादिकर्मनाम उपासनंसेवनमनुष्ठानमितियावत् ॥ आ
चारसेवनीत्यादौदर्शनात्॥अतएवसंध्याकृतासन्ध्योपासितेतितुल्यवत्प्रयोगः॥अथवाब्र
ह्मणोपासितासंध्याविष्णुनाशङ्करेणच ॥ कस्तांनोपासयेद्देवींसिद्धिकामोद्विजोत्तमइति
योगियाज्ञवल्क्येनदेवीत्वेनकीर्तनात्सन्ध्यारूपायादेवतायावक्ष्यमाणप्राणायामादिनो
पासनमाराधनंसन्ध्योपासनं॥सिद्धिरत्रमोक्षः॥ अनर्हःकर्मणामित्यादिनासन्ध्योत्तरक
र्मणिकृतसन्ध्यस्याधिकारइत्युक्तम्॥ अथवा ॥ चिरन्तनसन्ध्यात्यागिनः पतितस्येवद्वि
जातिकर्मानधिकारः ॥ नानुतिष्ठतियःपूर्वांनोपास्तेयश्चपश्चिमाम् ॥ सशूद्रवद्बहिःकार्यः
सर्वस्माद्विजकर्मणइतिमनुदर्शनात् ॥ विष्णुपुराणे ॥ सर्वकालमुपस्थानंसन्ध्ययोःपार्थि
वेष्यते ॥ अन्यत्रसूतकाशौचविभ्रमातुरभीतितः ॥ विभ्रमश्चित्तविक्षेपः मेघादिनाका

लाज्ञानमित्यन्ये ॥ यद्यप्यत्रमध्याह्नसंध्यानोक्तातथापि एतत्सन्ध्यात्रयम्प्रोक्तम्ब्राह्म
ण्यंयदधिष्ठितम् ॥ यस्यनास्त्यादरस्तत्रनसब्राह्मणउच्यते इतिछन्दोगपरिशिष्टात् ॥
संध्यात्रयंतुकर्त्तव्यंद्विजेनात्मविदासदेतियोगियाज्ञवल्क्याच्चसापिबोद्धव्या ॥ एतेनसं
ध्यात्रयेनित्याधिकारोदर्शितःपापक्षयकामाधिकारोप्यत्र यदाहयाज्ञवल्क्यः॥ दिवावा
यदिवारात्रौयदज्ञानकृतंभवेत् ॥ त्रिकालसंध्याकरणात्तत्सर्वंचप्रणश्यति ॥ सततंसंध्या
निष्णातस्यफलांतरमप्याह यमः ॥ संध्यामुपासतेयेतुसततंशंसितव्रताः ॥ विधूतपापा
स्तेयांतिब्रह्मलोकंसनातनं ॥ संध्याद्वयेप्रत्येकमपिपापक्षयमाह मनुः ॥ पूर्वांसंध्यांजपं
स्तिष्ठन्नैशमेनोव्यपोहति ॥ पश्चिमांतुसमासीनोमलंहंतिदिवाकृतं॥ नन्वेवंकेवलमध्याह्न
संध्यायांकिंप्रमाणंमैवं उत्तीर्यधौतेवाससीपरिधायमृदोरूकरौप्रक्षाल्याचम्यत्रिरायम्या
सूनित्यादिनाकात्यायनेनमध्याह्नस्नानोत्तरंनरसिंहपुराणादौचकेवलायाअपि वक्ष्यमा
णत्वात्॥ एवंचसंध्यात्रयेप्रत्येकमपिकर्त्तव्यतायादर्शितत्वादेकसंध्यालोपेअपरापिनकर्त्त

व्यामिलितगोचरत्वादधिकारस्येतिदुर्मतिः ॥ देशमाहतुः शंखलिखितौ ॥ सव्रतीबहिः संध्यामुपासीत॥सव्रतीब्रह्मचारीव्रतयुक्ताध्ययनशीलत्वात्॥बहिर्ग्रामात् नैनंग्रामेभिनि म्लोचेत्सूर्य्योनाभ्युदियात्क्वचिदितिमनुदर्शनात् ॥ एनंब्रह्मचारिणमभिनिम्लोचेत्अ स्तंयायात्॥गुणफलमाहशातातपः॥अनृतंमद्यगंधंचादिवामैथुनमेवच॥पुनातिवृषलस्या न्नंबहिःसंध्याह्युपासिता ॥गृहेषुप्राकृतीसंध्यागोष्ठेशतगुणास्मृता॥ नदीषुशतसाहस्त्रीह्य खाततीर्थेशतगुणासाहस्त्रीजाह्नवीजले ॥ संध्याकालपरिमाणमाहयोगियाज्ञवल्क्यः॥ ह्रासवृद्धीहिसततंदिवसानांयथाक्रमं॥संध्यामूहुर्त्तमात्रंतुह्रासेवृद्धौचसासमा॥सर्वर्त्तुषुप्रा तःसंध्यासायंसंध्याचदंडद्वयमेवभवतीति ॥यथा॥संधौसंध्यामुपासीतनास्तगेनोद्गतेरवौ ॥ संधावितिपूर्वंविधानात् ॥ नास्तगइतिसंधिरूपमुहूर्त्तादुर्ध्वंनिषेधानुवादकंसतिसंभवे सादित्यामारभेदित्येवपरंवा ॥ उपक्रमकालमाहसंवर्त्तः ॥प्रातःसंध्यांसनक्षत्रामुपासीत

यथाविधि ॥ सादित्यांपश्चिमांसंध्यामर्धास्तमितभास्करां ॥ आदित्यपदमस्तमयप्राच्य
पूर्णबिंबपरं ॥ समाप्तिकालमाहयाज्ञवल्क्यः ॥ जपन्नासीतसावित्रींप्रत्यगातारकोदया
त्॥संध्यांप्राक्प्रातरेवंहितिष्ठेदासूर्यदर्शनात् ॥ प्रत्यक्पश्चिमाभिमुखः प्राक्पूर्वाभिमु
खः आसीतेतिसायंजपेआसीनतार्थम् तिष्ठेदितिप्रातर्जपऊर्ध्वत्वार्थम् मध्यान्हसंध्याज
पेप्यूर्ध्वतैव॥तिष्ठेदुदयनात्पूर्वांमध्यमामपिशक्तितःइतिछंदोगपरिशिष्टात्॥ स्नानोत्तरत्वं
मध्याह्नसंध्यायाःप्रागेवोक्तं ॥ मनुः॥ऋषयोदीर्घसंध्यत्वाद्दीर्घमायुरवाप्नुयुः॥प्रज्ञांयशश्च
कीर्तिंचब्रह्मवर्चसमेवच ॥ दीर्घसंध्यत्वंप्रातरुदयावधि सायंचनक्षत्रावधि जपेत् ॥ एतच्च
गुणफलमिति॥वाक्यांतरेपि सूर्यनक्षत्रयोरेवावधित्वंतत्फलार्थमेकमूलत्वानुरोधात्॥ अ
थवासूर्यनक्षत्रयोःप्राक्कालोपिनित्यजपांगतयाबोध्यते॥नतुतत्कालस्यसावित्रीजपेना
भिव्याप्तिरित्यत्रापितात्पर्यं॥उभयपक्षेऽपिकामनाविरहेविहितदशादिसंख्यादरः ॥ का
मिनस्तुदीर्घसंध्यात्वएवश्रवणाज्जपेनकालव्याप्तावेवतात्पर्यं॥अत्रचजपदीर्घत्वेनदीर्घसं

ध्याभिधानात्जपेनसंध्याकर्मसमाप्तिरितिमंतव्यं ॥ उभेसंध्येजपन्नप्यमुपासीतयथावि
धिइत्यादिनावाक्येषुसावित्रीजपस्यसंध्यांतर्गमःस्फुटः ॥ एवमजपेप्रत्यवायश्रवणंतद
भिप्रायमेव फलश्रुतेतुसावित्रीजपःपृथगपीति॥अघमर्षणसूक्तस्यापोहिष्ठेतितृचस्यद्रु
पदायाश्चऋष्यादिकमुक्त्वा योगियाज्ञवल्क्यः एवंज्ञात्वातुमंत्राणांप्रयोगंवैद्विजोत्तमाः॥
संध्यामुपासयेद्यद्वद्यथावत्तंनिबोधत ॥ अत्राहुः ॥ सर्वैषामेवमंत्राणामादावृष्यादिकंस्मृ
त्वापश्चात्संध्याप्रयोगस्तदयुक्तंएवंह्यंगभूतेनऋष्यादिस्मरणेनसहसर्वैषामेवमंत्राणामा
नंतर्यंन्यायागतंबाध्यते॥ॐ कारस्यसप्तव्याहृतीनांसावित्र्याः शिरसश्चऋष्यादिकंस्था
नान्तरेयोगियाज्ञवल्क्येनकथितामितिकथंनतत्पूर्वभावः किंचअघमर्षणसूक्तस्यऋष्या
दिकंप्रथममुक्तंतदेवप्रथमंस्यात्॥तस्माज्ज्ञात्वेतिप्रयोगाद्बहिर्ज्ञानंप्रयोगकालेसौकर्यार्थं
अथवाज्ञात्वोपासयेदितिप्रत्येकमभिसंबध्यते ॥ तेनतत्तन्मंत्रस्यऋष्यादिकंतत्तन्मंत्रप्र
योगात्प्राग् ज्ञातव्यमितिसिध्यति ॥ प्रणवव्याहृतिसावित्रीशिरसांचमिलितानामेवप्रा

णायामेविनियोगइतितेषांमिलितानामेवऋष्यादिकंस्मृत्वाप्राणायामः ॐ कारस्यश्वेत
वर्णकथनंसावित्र्याश्चाग्निमुखकथनंस्तुतिर्विनियोगाभावात्॥ आर्षंछंदोदैवतंचविनियो
गस्तथैवच ॥ वेदितव्यंप्रयत्नेनब्राह्मणेनविशेषतः॥ इत्यादिनानास्थानेपुचतुर्णामेवा
भिधानात्॥अथऋष्यादिस्मरणेपाठिकक्रमोग्राह्यः॥स्थानांतरेष्वप्यनेनैवक्रमेणऋष्या
दिचतुष्ककथनम्॥एवंपञ्चविधंयोगंजप्यकालेष्वनुस्मरेत् ॥ होमेचान्तर्जलेयोगेस्वाध्या
येयाजनेतथेतिशतपथब्राह्मणांतर्भावेनपञ्चविधत्वंप्रकरान्तरमधिकफलार्थंवा ॥इदञ्चऋ
ष्यादिस्मरणंयत्रमन्त्रेप्रामाणिकन्ततः प्राक्प्रयोगेएवकर्त्तव्यम् ॥सन्ध्योपक्रमेव्यासः॥
स्मृत्वोंकारञ्चगायत्रींनिबध्नीयाच्छिखान्ततः॥ पुनराचम्यहृदयंनाभिंस्कधौचसंस्पृशेत्॥
यदितस्मिन्कालेमुक्तशिखः स्यात्तदानेनमन्त्रेणशिखांबध्वाआचामेदित्यर्थः॥नतुसमंत्र
कत्वार्थंपूर्वबद्धापिशिखामोचनीयेतिभ्रमःकार्यः ॥ छन्दोगपरिशिष्टे ॥ सव्येपाणौकुशा
न्कृत्वाकुर्यादाचमनक्रियाम् ॥ सव्यःसोपग्रहःकार्योदक्षिणःसपवित्रकः ॥ सोपग्रहःकु

शान्कृत्वेतिपूर्वोक्तकुशत्रयसमीपे अग्रिमकर्मोपयुक्ताःकुशाधर्त्तव्याइत्युक्तं तत्रकुशस्याकां
क्षितत्वात् उपगृह्यतइत्युपग्रहइतिव्युत्पत्तिसम्भवाच्च ॥ अथपवित्रं ॥ अनन्तर्गर्भिणंसा
ग्रंकौशंद्विदलमेवच ॥ प्रादेशमात्रंविज्ञेयंपवित्रंयत्रकुत्रचित्॥ अनेनैवलक्षितम्॥ह्रस्वाः
प्रचरणीयाःस्युःकुशादीर्घास्तुबर्हिषः ॥ दर्भाःपवित्रमित्युक्तमतःसन्ध्यादिकर्माणि ॥ अ
स्यार्थः ॥ यतःप्रचरणादौह्रस्वादिविधिस्ततः सन्ध्यादौविशेषविध्यभावाद्दर्भमात्रमेवा
ङ्गंनतुपवित्रलक्षणमेतत् पूर्वलक्षणबाधात्॥ अतइत्यन्वयाद्वाक्यभेदापत्तेश्च ॥ अत्रचाच
मनात्प्रागेवपवित्रधारणम्॥आचम्यप्रयतोनित्यंपवित्रेणद्विजोत्तमः ॥नोच्छिष्टस्तुभवेत्त
त्रभुक्तशेषन्तुवर्जयेदितिलघुहारीतदर्शनादन्यत्रजपोपयुक्तकुशत्रयधारणमपिदक्षिणक
रेपवित्रधारणावसरएवकुर्वन्ति॥अविरुद्धञ्चैतत् ॥ लघुहारीतः ॥ दर्भहीनातुयासन्ध्याय
च्चदानंविनोदकम् ॥ असंख्यातञ्चयज्जप्यं तत्सर्वंनिष्फलम्भवेत् ॥ योगियाज्ञवल्क्यः ॥
ऐशान्यभिमुखोभूत्वाशुचिःप्रयतमानसः ॥ आचान्तःपुनराचामेद्दतमित्यभिमन्त्र्यच ॥

आन्तरंशुद्ध्यतिह्येवमन्नपानमलीकृतम् ॥ तथा ॥ पूर्वासन्ध्यातुगायत्रीसावित्रीमध्यमा स्मृता ॥ याभवेत्पश्चिमासन्ध्यासांतुदेवीसरस्वती ॥ रक्ताभवतिगायत्रीसावित्रीशुक्लव र्णिका ॥ कृष्णासरस्वतीज्ञेयासन्ध्यात्रयमुदाहृतम् ॥ कामधेन्वादौ श्वेताभवतिगायत्रीसा वित्रीरक्तवर्णिकेतिकचित्पाठः एतच्चसन्ध्यारूपकथनंध्यानार्थंस्तुतिमात्रपरंवा ॥ गाय त्रीकालत्रयेपिशुक्लवर्णैवध्येयेतिवक्ष्यते ॥ यासन्ध्यासाचगायत्रीत्रिधाभूत्वाव्यवस्थिते ति॥अभेदाभिधानंस्तुतिः॥पारमार्थिकेप्यभेदेजपोपक्रमेशुक्लायाएवध्यानं॥बृहस्पतिः॥ बध्वासनंनियम्यस्वंस्मृत्वाकृष्यादिकन्ततः ॥ सन्निमीलितदृङ्मौनीप्राणायामान्समभ्य सेत् ॥ आसनं ॥ पद्ममर्द्धासनंचापितथास्वस्तिकमितिवायुपुराणोक्तम् ॥ स्वमात्मानंनि यम्यासूनितिपाठेप्राणायामपदंमंत्रपरं॥अत्रछंदोगपरिशिष्टे ॥ रक्षांतेवारिणात्मानंपरि क्षिप्यसमंततः ॥ रक्षाकार्येतिशेषः अंतःशब्दस्यादावपिशक्तत्वात् शिष्टाचारानुरोधात् प्राणायामादावियंरक्षाकार्येत्यर्थः ॥ कामधेनौतुप्राणायामानंतरमेवलिखितं ॥ शंखवसि

ष्ठांगिरोबृहस्पतिपैठीनसिबौधायनाः ॥ सव्याहृतिंसप्रणवांगायत्रींशिरसासह ॥ त्रिःप
ठेदायतप्राणःप्राणायामःसउच्यते ॥ व्याहृतंचछंदोगपरिशिष्टे ॥ भूराद्यास्तिस्त्रएवैता
महाव्याहृतयोऽव्ययाः॥ महर्जनस्तपःसत्यंगायत्रीचशिरस्तथा॥आपोज्योतीरसोऽमृतं
ब्रह्मभूर्भुवःस्वरोमितिशिरः ॥ प्रतिप्रतीकंप्रणवमुच्चारयेदंतेचशिरसः॥ एताएतांसहाने
नतथैभिर्दशभिःसह॥ त्रि.पठेदायतप्राणः प्राणायामःसउच्यते ॥ प्रतिप्रतीकंसव्या
हृतीनांगायत्र्याःशिरसश्चादावित्यर्थः॥एवंशिरोंतप्रणवमादायदशभवंति॥एताव्याहृतीः
एताङ्गायत्रीं अनेनशिरसा एभिःप्रणवैः आयतप्राणोनियतवातः॥ नियमश्च पूरकेआ
दानमेव कुम्भकेधारणमेव रेचकेत्यागएवेत्येवंरूपः ॥ योगियाज्ञवल्क्यः॥ पूरकरेचक
कुम्भकैःप्राणायामस्त्रिलक्षणोज्ञेयः ॥ त्रिलक्षणस्त्रिविधः॥एतच्चयोगियाज्ञवल्क्यएवपौ
र्वापर्यपरामर्शाद्व्यक्तम्॥एवंचप्रत्येकमेवप्राणायामत्वात्प्रत्येकमेवत्रिरावृत्तोमंत्रपाठः ए
तावतैवप्राणायामत्रयसिद्धिरिति॥अतएवततोंतःशुध्यतित्रिभिरित्युपसंहारः॥ आदानं

रोधमुत्सर्गंवायोस्त्रिस्त्रिःसमभ्यसेदितिव्यासोक्तोनवधाभ्यासः॥पक्षान्तरम्॥ त्रिविधङ्के
चिदिच्छन्तितथैवनवधापरे इत्यनेनाप्यभिधानात्॥ तथाहि॥ नासिकाकृष्टउच्छ्वासो
ध्मातःपूरकउच्यते॥कुम्भकोनिश्चलश्वासोरिच्यमानस्तुरेचकः॥नीलोत्पलदलश्यामंना
भिदेशेप्रतिष्ठितम्॥ चतुर्भुजंमहात्मानं पूरकेणैवचिन्तयेत्॥ कुम्भकेनहृदिस्थंनिध्याये
त्रकमलासनम्॥ ब्रह्माणंरक्तगौराङ्गं चतुर्वक्त्रंपितामहम्॥ रेचकेनेश्वरन्ध्यायेल्ललाटस्थं
महेश्वरम्॥ शुद्धस्फटिकसङ्काशंनिर्मलम्पापनाशनम्॥ पूरकेणेत्यादौतृतीयासप्तम्य
र्थे कालोपलक्षणत्वात्॥गौरसर्वाङ्गपाठेगौरपदंरक्तपरंनानार्थत्वात्॥तथाचव्यासः॥रक्त
म्प्रजापतिंध्यायेदिति॥ मात्राभेदान्मृदुमध्यमोत्तमत्वंयोगिप्राणायामविषयं॥ संध्या
प्राणायामकालस्यमन्त्रपाठेनैवावच्छेदात्॥पूरकरेचककुम्भकैर्मिलित्वैकःप्राणायामः॥
कुंभकमात्रएवतुमंत्रपाठइत्याद्यसत्॥पक्षनिरासविस्तरश्छन्दोगाह्निकेनुसंधेयः॥योगि
याज्ञवल्क्यः॥प्राणस्यायमनंकृत्वाआचामेत्प्रयतोपिसन्॥आतरंविद्यतेयस्मात्तस्मादाच

मनंस्मृतं ॥ हेतुनिर्देशस्सर्वस्मिन्नेवप्राणायामेआचमनप्राप्त्यर्थः ॥ अत्रहलायुधनिबंधे
तुप्रक्षालितपाणिपादोऽपआचम्यअग्निश्चमामन्युश्चेतिसायमपःपीत्वा सूर्यश्चमामन्यु
श्चेतिप्रातरिति बौधायनवाक्यमाचमनमंत्रेप्रमाणमुक्तम् ॥ एतच्चवाक्यंसंध्याप्राक्काली
नप्रोक्षणात्प्राक्श्रुतम् ॥ तस्मात्प्राणायामानन्तरमाचमने मंत्रसंबंधेआचारएवप्रमाणं॥
अतएवमध्याह्नेऽपिमंत्रइतिकेचित् ॥ प्रातःसूर्यश्चमेत्युक्तासायमग्निश्चमेतिच॥ आपःपुनं
तुमध्याह्नेकुर्यादाचमनंततइतिराजाद्यालिखितंमैत्रायणीयगृह्यपरिशिष्टवचनंप्रमाणमा
हुः ॥ प्राणायामानंतरमापोहिष्ठेत्यादिनामार्जनमाह याज्ञवल्क्यः ॥ प्राणानायम्यसंप्रो
क्ष्यतृचेनाब्दैवतेनतुइति ॥ विभागमाहव्यासः ॥ विप्रुषोष्टौक्षिपेन्मूर्ध्निअधोयस्यक्षया
यचेति ॥ प्रकारमाहछंदोगपरिशिष्टे ॥ शिरसोमार्जनंकुर्यात्कुशैः सोदकबिंदुभिरिति॥य
तुयोगियाज्ञवल्क्येनसार्द्धयर्चाधःप्रक्षिप्यसार्द्धयोर्ध्वंतुप्रक्षिपेदितिविभागउक्तःसप्राची
नमार्जने॥एवंसंमार्जनंकृत्वाबाह्यशुद्ध्यर्थकारणम् ॥ अथाभ्यंतरशुद्ध्यर्थंप्राणायामान्सम

भ्यसेदितिउपसंहारात् ॥ एतच्चसंमार्जनंस्नानासामर्थ्येसंध्यानुकूलशौचार्थमेव बाह्यशु
द्ध्यर्थकारणमितिश्रवणात् ॥ अधिकफलार्थंवा ॥ अतएवबहुभिरननुष्ठानमनावश्यकत्वा
त्कल्पांतरंचेतिपरिभाव्यं ॥प्राणायामानंतरंमार्जनंसंध्यांतर्गतमितिदर्शितमेव॥अयमपि
संध्यामंत्रक्रमे ॥प्राणायाममंत्रानंतरमार्जनमंत्रमाह ॥ ॐकारंव्याहृतीःसप्तगायत्रींशिर
सासह ॥ आपोहिष्ठाऋचस्तिस्रःसूक्तंचैवाघमर्षणमिति॥अत्रयद्यप्यापोहिष्ठानंतरमघ
मर्षणमुक्तंतथापिमध्येद्रुपदाबोद्धव्या ॥ सर्वत्रमार्जनंकर्मअब्लिंगानामुदाहृतम् ॥ इत्य
नंतरंद्रुपदाऋष्यादिकमुक्त्वाअपःपुण्याःसमादायत्रिःपठेद्द्रुपदामृचम्॥ ततोयंमूर्ध्निविन्य
स्यसर्वपापैःप्रमुच्यते इतिद्रुपदाप्रयोगमुक्त्वा ॥एवंज्ञात्वातुमंत्राणामित्यादिनासंध्याभि
धानात् ॥ एवंचोक्तएवद्रुपदाप्रयोगःसंध्यायांग्राह्यः ॥प्रकारांतरेप्रमाणाभावात्॥ अघ
मर्षणप्रयोगस्तुछंदोगपरिशिष्टेदर्शितः॥करेणोद्धृत्यसलिलंघ्राणमासज्यतत्रच ॥ जपेद
नायतासुर्वात्रिःसकृद्वाघमर्षणमिति ॥ अनायतासुर्वेतिविकल्पबलादायतासुरनायतासु

रपि आयतासुपक्षेसकृत् अनायतासुपक्षेत्रिरितिव्यवस्थितविकल्पः॥शंखः॥उपस्पृशेत्त
तःपश्चान्मंत्रेणानेनधर्मतः॥अन्तश्चरसिभूतेषुगुहायांविश्वतोमुखः॥त्वंयज्ञस्त्वंवषट्कारआ
पोज्योतीरसोमृतमितिप्राणायामानंतरमाचमनविधानादायतासुपक्षेशंखोक्तवचनमुप
संहर्त्तव्यमितिकेचित् एतच्चाचमनंमार्जनानंतरंश्रुतमपिऋष्यंतरोक्ताघमर्षणानंतरमनु
ष्ठेयं॥शंखेनाप्येतदनंतरंसूर्यांजलिदानाभिधानादुपस्थानात्प्राक् ॥छंदोगपरिशिष्टे ॥ उ
त्थायार्कंप्रतिप्रोहेत्त्रिकेणांजलिमंभसः॥प्रोहेत्क्षिपेत् त्रिकेण॥ प्रणवोभूर्भुवःस्वश्चगाय
त्रीचतृतीयकाइत्यनेनैवप्रागुक्तेन॥अंजलिमित्येकत्वस्यविवक्षितत्वादंजलित्रयदानमशु
द्धं ॥ कात्यायनश्च॥ पुष्पाण्यंबुमिश्राण्यूर्ध्वंक्षिप्त्वोर्ध्वबाहुः सूर्यमुदीक्षेत उद्वयंतमउदुत्यं
चित्रंतच्चक्षुरितिगायत्र्याचयथाशक्तिजपरूपमुपस्थानं॥अत्रमध्याह्नसंध्यांजलौसजलपु
ष्पश्रवणात्॥विष्णुपुराणादौतोयमात्रश्रवणमुपलक्षणं॥प्रातःसायंविषयंवा तथाचतैत्ति
रीयश्रुतिः॥ब्रह्मवादिनः सूर्याभिमुखाःसंध्यायांगायत्र्याभिमंत्रिताअपऊर्ध्वमुत्क्षिपंति ता

एताआपोवज्रभूतास्तानिरक्षांसि मंदेहारुणद्वीपे प्रक्षिपंति यत्प्रदक्षिणंप्रक्रामंतितेन
पाप्मानमवधुन्वंति उद्यंतमस्तंयांतमादित्यमभिध्यायन्ब्राह्मणोविद्वान्सकलंभद्रमश्नुते
इति ॥ तथाचोर्ध्वबाहुविधानात् ॥तदसंसक्तपार्ष्णिर्वाएकपादर्धपादपि ॥कुर्यात्कृतांजलि
र्वापिऊर्ध्वबाहुरथापिवा इति छंदोगपरिशिष्टीयमुपस्थानेकृतांजलित्वं सायंप्रातर्विषय
मेव ॥ उदीक्षेतेतिसूर्याभिमुखत्वेतात्पर्यं ॥तेनमेघादिच्छन्नेपिसंमुखमुपतिष्ठेदुपस्थायेत्यु
पसंहारात्तुगायत्र्याचजपितयैवोपस्थानंऽमंत्रकरणकंहिदेवताज्ञानमुपस्थानं ॥ तच्चजपे
पिसंभवति॥अनर्थपरएवोच्चारणेजपपदमितिप्रायिकम् ॥ अन्यत्रार्थपरत्वेप्रमाणाभा
वात् ॥ अतएवयथाशक्तीतिनानाजपसंख्यासंभवात् ॥ युक्तंचैतत् पृथक्कात्यायनेनज
पानभिधानाद्दृष्ट्यंतरसंवादाच्चेति ॥ याज्ञवल्क्यः ॥ स्नानमब्दैवतैर्मंत्रैर्मार्जनंप्राणसं
यमः ॥ सूर्यस्यचाप्युपस्थानंगायत्र्याः प्रत्यहंजपइति मार्जनप्राणसंयमयोःपाठक्रमोन
ग्राह्यः॥प्राणायामादेःसंध्याप्रयोगोपलक्षणार्थत्वात् ॥ एवंकात्यायनेनापिप्राणायामानं

तरमुपस्थानाभिधानंसंक्षेपात्॥गायत्रीजपेयोगियाज्ञवल्क्यः ॥प्रणवोभूर्भुवःस्वश्चस्वां
गानिहृदयादितः॥त्रिरावर्त्यततःपश्चादार्षंछंदश्चदैवतं॥ विनियोगस्तथारूपंध्यातव्यंक्र
मशस्तुवै॥रूपमाह॥श्वेतवर्णासमुद्दिष्टाकौशेयवसनातथा ॥ श्वेतैर्विलेपनैःपुष्पैरलंकारै
श्चभूषिता॥ आदित्यमंडलस्थाचब्रह्मलोकगताथवा ॥ अक्षसूत्रधरादेवीपद्मासनगता
शुभा॥ आवाह्ययजुषानेनतेजोऽसीतिविधानतः॥ तत्रावाह्यजपित्वाचनमस्कृत्यविसर्ज
येत् ॥गायत्रीमधिकृत्यशतपथश्रुतिः॥तस्याउपस्थानं॥गायत्र्यस्येकपदीद्विपदीत्रिपदीच
तुष्पद्यपदासिनहिपद्यसेनमस्तेतुरीयायदर्शतायपदायपरोरजसेसावदोमाप्रापदिति
यंद्विष्यादसावस्मैकामोमासमर्द्धतिवामहैवास्मैसकामःसमृध्यते यस्माएवमुपतिष्ठते ॥
उपस्थानं चैतज्जपात्प्राक्॥ तथाच बौधायनः॥ उपतिष्ठेद्बाएतांदेवींतुरीयेणपदेन ॥ अ
थाप्युदाहरंति ॥ गायत्र्यस्येकपदीद्विपदीत्रिपदीचतुष्पद्यपदासिनहिपद्यसे नमस्तेतुरी
यायदर्शतायपदायपरोरजसेइत्यथैनांजपतीति अथापीत्यादिनातुरीयपदस्वरूपकथनं

एवंश्रुतावपिपरोरजसइत्यंतोमंत्रः अग्रेचार्थवादः॥इदंचबौधायनवाक्यंराजाद्यलिखित
मपिबहुजनसंमतत्वाल्लिखितं॥जप्यमाहयोगियाज्ञवल्क्यः॥ॐकारः पूर्वमुच्चार्य्योभूर्भुवः
स्वस्ततःपरं॥गायत्रीप्रणवश्चांतेजप्येह्येवमुदाहृतम् ॥ एवंगायत्र्यादौद्वितीयोंकारोच्चार
णमंतिमोंकारत्यागश्चायुक्तः॥मन्वादावप्यंते ॐकारांतर्भावात्॥यमः सहस्रपरमांदेवीं
शतमध्यांदशावरां॥गायत्रींप्रजपेन्नित्यंसर्वकल्मषनाशिनीं॥अत्रबौधायनः॥शतकृत्वोऽप
रिमितकृत्वोवादशावरामिति॥अपरिमितकृत्वोदशोपरिशतादर्वागनियतसंख्यामित्यर्थः
गोभिलः ॥ कदाचिदपिनोविद्वान्गायत्रीमुदकेजपेत् ॥ गायत्र्यग्निमुखीयस्मात्तस्मादु
त्थायतांजपेत् ॥ बृहस्पतिः ॥ मार्जनंजलमध्येतुप्राणायामोयतस्ततः ॥ उपस्थानंततःप
श्चात्सावित्रीजपउच्यते ॥ मार्जनंमंत्रस्नानांगभूतमपेक्षितं ॥ यतस्ततोजलेस्थलेच॥एवं
चप्राणायामस्यसंध्यांतर्गतस्यजलेस्थलेचविधानादुपस्थानपर्यंतासंध्याजलेप्यस्यमते
गायत्रीजपस्तुस्थलएवोक्तः॥ कात्यायनेनोत्तीर्यप्राणायामादिकमुक्तम्॥ नरसिंहपुराणे

स्नानोत्तरतर्पणात्प्रागुक्तं ॥ दर्भेषुदर्भपाणिः सन्प्राङ्मुखःसुसमाहितः ॥ प्राणायामास्तु
कुर्वीतयथाशास्त्रमतंद्रितः ॥ जपेदहरहःस्नात्वासावित्रींजपविद्द्विजः ॥अथपुष्पांजलिंक्षि
प्त्वाभानवेचोर्ध्वबाहुकः ॥ उदुत्यंचजपेन्मंत्रंचित्रंतच्चक्षुरित्यपि ॥ प्रदक्षिणमुपावृत्यनम
स्कृत्यततः प्रभुमिति॥ अत्रदर्भेष्वितिश्रवणात्स्थलएवसंध्याकरणमुक्तम् ॥ जपानंतरमु
पस्थानंप्रकारांतरमेतत्॥ बौधायनेऽपिदर्शनात् ॥ हारीतःप्रणवव्याहृतिसावित्रींजपन्पा
पेभ्योमुच्यते॥शतंजप्त्वामानसात्पूतोभवति॥सहस्रंजप्त्वावाक्कायकृतात्पूतोभवति॥ यमः
नतथावेदजप्येनपापंनिर्दहतिद्विजः ॥ यथासावित्रीजप्येनसर्वपापैःप्रमुच्यते ॥ अथज
पविधिः ॥तत्रशंखः॥ कुशवृष्यामासीनःकुशोत्तरायांवा कुशपवित्रपाणिरुदङ्मुखः सूर्या
भिमुखोऽक्षमालामादायदेवतांध्यायन्जपंकुर्यात् सुवर्णमणिमुक्ताफलस्फाटिकपद्माक्षें
द्राक्षरुद्राक्षपुत्रजीवकानामन्यतमानामक्षमालांकुर्वीत ॥कुशग्रंथिकृतांवाहस्तोपयामैर्वा
गणयेत् ॥देवतांध्यायन्निति देवताध्यानस्यजपांगताविधानाद्यत्रनदेवताविशेषविधिस्त

त्रापिमन्त्रप्रकाश्यादेवताध्येया ॥ हस्तोपयामोऽगुलीनमनम् ॥ देशमाह ॥ याज्ञव
ल्क्यः ॥ गृहेत्वेकगुणंजप्यंनद्यांतुत्रिगुणंस्मृतम् ॥ गवांगोष्ठेशतगुणमग्न्यागारेशताधि
कम् ॥ सिद्धिक्षेत्रेषुतीर्थेषुदेवतायाश्चसन्निधौ ॥ सहस्त्रंशतकोटीनामनन्तंशिवसन्निधौ ॥
॥ तथा ॥ तिष्ठंश्चोद्वीक्ष्यमाणोऽर्कंजपंकुर्यात्समाहितः ॥ अन्यथाप्राङ्मुखःकुर्याद्वक्ष्यमा
णक्रमेणतु ॥ प्राक्कूलेषुकुशेष्वेवचासीनश्चासनेशुभे ॥ नात्युच्छ्रितेनातिनीचेदर्भपाणिः
सुसंयतः ॥ स्फाटिकेन्द्राक्षरुद्राक्षपुत्रजीवसमुद्भवैः ॥ अक्षमालाहिकर्त्तव्याप्रशस्ताह्यु
त्तरोत्तरा ॥ प्राक्कूलेषुप्रागग्रेषु ॥ दीर्घकालीनफलार्थंजपेभक्ष्यमाह ॥ शाकयावकभैक्षा
णिपयोमूलफलानिच ॥ दधिसर्पिस्तथाह्यापः प्रशस्तंह्युत्तरोत्तरम् ॥ चरवोह्युपवासश्च
भैक्षंनक्तमयाचितम् ॥ विशश्रृङ्गाटशालूकहविष्यान्नानियानितु ॥ एतान्यनुव्रतान्याहुः
शस्तानिजपकर्मणि ॥ पुनर्भैक्षोपादानंप्रशंसार्थम् ॥ अत्रशाकादीनांविकल्पात् भक्ष्य
विशेषेणजपारम्भेएकादश्युपवासोऽपिनकर्त्तव्यइतिहरिहरः ॥ एतान्यनुव्रतानीत्युपसं

हारादितरव्यावृत्तौतात्पर्यम् ॥ एषांतुविकल्पःसमुच्चयोवेतिनास्था ॥ जप्यमाहमनुः ॥
वेदमेवजपेन्नित्यंयथाकालमतन्द्रितः ॥ तंह्यस्याहुःपरंधर्ममुपधर्मोऽन्यउच्यते ॥ वेदमेवे
त्यावश्यकाभिप्रायम्फलाधिक्यार्थंवा परमोधर्मइत्युपसंहारात् ॥ अतोनपौराणिकादि
मन्त्रजपेनिषेधः ॥ याज्ञवल्क्यः ॥ यज्ञानान्तपसाञ्चैवशुभानाञ्चैवकर्मणाम् ॥ वेदएव
द्विजातीनांनिःश्रेयसकरःपरः ॥ विष्णुः ॥ स्नातश्चपवित्राणियथाशक्तिजपेत् ॥ विशेषतः
सावित्रीम्पुरुषसूक्तंवा ॥ नैताभ्यामाधिकमस्ति ॥ शङ्खः ॥ नाघमर्षणात्परमन्तर्जले न
व्याहृतिभ्यः परं होमे न सावित्र्याः परं जप्ये ॥ मनुयमशंखवसिष्ठहारीतयोगियाज्ञव
ल्क्याः ॥ जप्येनैवतुसंसिद्ध्येद्ब्राह्मणोनात्रसंशयः ॥ कुर्यादन्यन्नवाकुर्यान्मैत्रोब्राह्मणउ
च्यते ॥ अङ्गिराः ॥ प्रणवाद्यास्तथावेदाः प्रणवेप्रत्यवस्थिताः ॥ वाङ्मयः प्रणवः सर्वम
भ्यस्येत्प्रणवन्ततः ॥ नरसिंहपुराणे ॥ त्रिविधोजपजज्ञःस्यात्तस्यभेदंनिबोधत ॥ वाचि
कश्चउपांशुश्चमानसश्चत्रिधास्मृतः ॥ त्रयाणांजपयज्ञानांश्रेयान्स्यादुत्तरोत्तरः ॥ यदु

च्चनीचस्वरितैः स्पष्टशब्दवदक्षरैः ॥ मन्त्रमुच्चारयेद्व्यक्तंजपयज्ञःसवाचिकः ॥ शनैरुच्चार
येन्मन्त्रमीषदोष्ठौप्रचालयन् ॥ किंचिच्छब्दंस्वयंविद्यादुपांशुःसजपःस्मृतः ॥ ध्येयाय
दक्षरश्रेण्योवर्णाद्वर्णंपदात्पदम् ॥ शब्दार्थचिंतनाभ्यासःसउक्तोमानसोजपः ॥ एवञ्च
त्रिविधस्यापिजपस्याविधानात् ॥ नोच्चैर्जप्यम्बुधःकुर्यात्सावित्र्याश्चविशेषतः॥इतिशं
खोक्तमल्पफलाभिप्रायम् ॥ ध्यायेतमनसामन्त्रान् जिह्वोष्ठौनविचालयेत् ॥ नकम्पये
च्छिरोग्रीवां दन्तान्नैवप्रकाशयेत् ॥ इतियोगियाज्ञवल्क्योक्तम्मानसजपविषयम् ॥
॥ योगियाज्ञवल्क्यः ॥ नचंक्रमन्नचहसन्नपार्श्वमवलोकयन् ॥ नापाश्रितोनजल्पंश्च
नप्रावृतशिरास्तथा ॥ नपदापदमाक्रम्यनचैवहितथाकरौ ॥ नचासमाहितमनानचसं
श्रावयञ्जपेत् ॥ नच्छिन्नवासाःस्थलगोजपादीनाचरेद्बुधः ॥ व्रताद्दतेनार्द्रवासानैकवासाः
समाचरेत् ॥ नजीर्णेननमलिनेननपरिक्लिष्टेनवाजपेत् ॥ यक्षराक्षसभूतानिसिद्धविद्या
धरोरगाः ॥ हरन्तिप्रसभंयस्मात्तस्माद्गुप्तंसमाचरेत् ॥ जपकालेनभाषेतव्रतहोमादिकेषु

च ॥ एतेष्वेवावसक्तंतुयद्यागच्छेद्द्विजोत्तमः॥ अभिवाद्यततोविप्रंयोगक्षेमञ्चकीर्त्तयेत् ॥
तूष्णीमासीतपाखण्डचाण्डालपतितादिकान् ॥ दृष्ट्वातान्वार्य्युपस्पृश्याभाष्यस्नात्वापुन
र्जपेत् ॥ नचैवहितथाकरौ पदाक्रम्येतिशेषः ॥एतेष्वेवावसक्तंजप्यादिषुप्रवृत्तम्॥तथा॥
यदिवाग्यमलोपःस्याज्जपादिषुकथञ्चन ॥ व्याहरेद्वैष्णवंमन्त्रंस्मरेद्वाविष्णुमव्ययम् ॥
॥ बौधायनः॥ कषायवासाःकुरुतेजपहोमप्रतिग्रहान् ॥ नतद्देवागमंभवति हव्यंकव्यम
थोहविः ॥ व्यासः॥ आर्द्रवासाश्चयःकुर्य्याज्जपंहोमंप्रतिग्रहम् ॥ सर्वन्तद्राक्षसंविद्या
द्बहिर्जानुचयत्कृतम् ॥ वसिष्ठः॥ जपहोमोपवासेषुधौतवस्त्रधरोभवेत् ॥ अलंकृतः शु
चिर्मौनीश्राद्धादौविजितेन्द्रियः॥ लघुहारीतः॥जपेहोमेतथादानेस्वाध्यायेपितृतर्पणे ॥
अशून्यन्तुकरंकुर्य्यात्सुवर्णरजतैःकुशैः॥ तथा॥ चितौदर्भाःपथिदर्भायेदर्भायज्ञभूमिषु॥
स्तरणासनपिण्डेषुतान्कुशान्परिवर्जयेत् ॥ पिण्डार्थंयेस्तृतादर्भायैःकृतंपितृतर्पणम् ॥
मूत्रोच्छिष्टैर्धृतायेचतेषांत्यागोविधीयते ॥ नीवीमध्येचयेदर्भाब्रह्मसूत्रेचयेधृताः ॥ पवि

त्रास्तान्विजानीयाद्यथाकायस्तथाकुशाः॥ अत्रगृह्यपरिशिष्टं ॥ अमेध्यलिप्तायेदर्भास्ते
षांत्यागोविधीयते ॥तथा॥ दर्भाःकृष्णाजिनंमंत्राब्राह्मणाहविरग्नयः॥ अयातयामान्येता
निनियोज्यानिपुनःपुनः॥यातयामञ्चिरन्तनत्वेनकार्याक्षमं ॥मरीचिः॥मासेनभस्यमावा
स्यातस्यान्दर्भाञ्चयोमतः॥अयातयामास्तेदर्भाविनियोज्याःपुनःपुनः॥एवञ्चविष्णौसुप्ते
कुशानोत्पाटनीयाइतिप्रसिद्धिरसमीचीनैव ॥ छन्दोगपरिशिष्टे॥ यत्रोपदिश्यतेकर्मकर्त्तु
रङ्गंनचोच्यते ॥ दक्षिणस्तत्रविज्ञेयःकर्मणाम्पारगःकरः ॥ यत्रदिङ्नियमोनास्तिजपहो
मादिकर्मसु ॥ तिस्रस्तत्रदिशःप्रोक्ताऐंद्रीसौम्यापराजिता ॥ आसीनऊर्ध्वःप्रह्वोवानि
यमोयत्रनेदृशः ॥ तदासीनेनकर्त्तव्यंनप्रह्वेनतातिष्ठता॥ सौम्योत्तरा अपराजिताऐशानी
॥ तथा ॥ सदोपवीतिनाभाव्यंसदाबद्धशिखेनतु॥विशिखोव्युपवीतिश्चयत्करोतिकृतंनत
त् ॥सदेतिश्रवणात्कर्मकालेऽकर्मकालेच॥यत्रनिवीतप्राचीनावीतयोर्नविधिस्तत्रसर्वत्रो
पवीतित्वं ॥एवञ्चयत्रदैवकार्योद्देशेनोपवीतित्वंश्रुतंतत्रापिदैवमुपलक्षणंपितृमनुष्यकार्या

तिरिक्तंसर्वंदैवमिति ॥ गोभिलः ॥दक्षिणबाहुमुद्धृत्यशिरोऽवधायसव्येंसेप्रतिष्ठापयतिद
क्षिणङ्कक्षमवलंब्यभवत्येवंयज्ञोपवीती ॥ सव्यंबाहुमुद्धृत्याशिरोवधायदक्षिणेंसेप्रतिष्ठाप
यतिसव्यंकक्षमवलंब्यप्राचीनावीतीभवति ॥ मनुः ॥ निवीतिनाकुण्ठसज्जने॥वायुपुरा
णे॥क्रियांयःकुरुतेमोहादनाचम्यैवनास्तिकः ॥ भवंतिहिवृथातस्यक्रियाःसर्वानसंशयः
॥बौधायनः ॥ कर्मयुतोनाभेरधःस्पर्शनंवर्जयेत् ॥ छंदोगपरिशिष्टे॥पितृमंत्रानुद्रवणेआ
त्मालंभेअवेक्षणे ॥ अधोवायुसमुत्सर्गेप्रहासेनृतभाषणे ॥मार्जारमूषकस्पर्शेआक्रुष्टेक्रो
धसंभवे॥निमित्तेष्वेवसर्वेषुकर्मकुर्वन्नुपस्पृशेत् ॥ अनुद्रवणेउच्चारणेआत्मालंभेहृदयस्प
र्शेअवेक्षणेहृदयस्यैव॥मार्जारस्पर्शोत्रमार्जारकृतः ॥स्वयंकृतेस्नानस्योक्तत्वात्॥योगिया
ज्ञवल्क्यः॥रौद्रपैत्र्यासुरान्मंत्रांस्तथाचैवाभिचारिकान्॥व्याहृत्यालभ्यचात्मानमपःस्पृ
ष्ट्वान्यदाचरेत् ॥पूर्ववाक्येपितृमंत्रानुद्रवणेआत्मालंभेचाचमनदर्शनादपः स्पृष्ट्वेत्याचम
नपरमेव॥याज्ञिकसंप्रदायेजलस्पर्शमात्रं ॥ येषांपूर्वत्राप्यपःस्पृशेदितिपाठस्तेषांजल

स्पर्शएवाविवादः ॥ परिधानाद्बहिःकक्षानिबद्धाह्यासुरीभवेत् ॥ धर्मेकर्मणिविद्वद्भिर्वर्जे
नीयाप्रयत्नतः ॥ तथा ॥ नाचरेत्कस्यचित्पीडांकर्मणामनसागिरा ॥ आचरन्नभिषेकंतुक
र्माण्यन्यानिवाचरेत् ॥ विधिहीनंभावदुष्टंकृतमश्रद्धयाचयत् ॥ तद्धरंत्यसुरास्तस्यमूढ
स्यह्यकृतात्मनः ॥ तथा ॥ प्रमादात्कुर्वतांकर्मप्रच्यवेताध्वरेषुयत् ॥ स्मरणादेवतद्विष्णोः
संपूर्णस्यादितिश्रुतिः ॥ अध्वरेष्वितिवैदिककर्ममात्रपरं ॥ अथसंध्याप्रयोगः ॥ वामेबद्ध्वा
न्कुशान्दक्षिणेपाणौपवित्रंकुशत्रयंचधृत्वासप्रणवगायत्र्याशिखांबध्वाऐशान्यभिमुखः
आचम्यऋतमित्यभिमंत्र्यपुनराचामेत्॥ततोवारिणात्मानंवेष्टयित्वारक्षांकुर्यात् ॥ ततः
ॐकारस्यब्रह्माऋषिर्गायत्रीछंदोऽग्निर्देवताशुक्लोवर्णः सर्वकर्मारंभेविनियोगःसप्तव्याहृ
तीनांप्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगत्यश्छन्दांस्यग्निवाय्वादित्य
बृहस्पतिवरुणेंद्रविश्वेदेवादेवताअनादिष्टप्रायश्चित्तेप्राणायामेविनियोगः॥ गायत्र्यावि
श्वामित्रंऋषिर्गायत्रीछंदः सवितादेवताऽग्निर्मुखमुपनयनेप्राणायामेविनियोगः ॥ शिर

सः प्रजापतिर्ऋषिर्ब्रह्माग्निवायुसूर्यादेवताः यजुः प्राणायामेविनियोगः ॥ इतिऋष्यादिकं स्मृत्वा बद्धासनः सन्निमीलितनयनोमौनीप्राणायामत्रयंकुर्यात् ॥ तत्रवायोरादानकाले पूरकनामाप्राणायामः तत्रश्यामंचतुर्भुजंविष्णुंनाभौध्यायेत् ॥ धारणकालेकुंभकस्तत्र कमलासनंरक्तवर्णंचतुर्मुखंब्रह्माणंहृदिध्यायेत् ॥ त्यागकालेरेचकस्तत्रश्वेतंत्रिनेत्रंशिवं ललाटदेशेध्यायेत् ॥ त्रिष्वप्येतेषुप्रत्येकंत्रिर्मंत्राभ्यासः प्रत्येकमोंकारादिसप्तव्याहृतयः ॥ ॐकारादिसावित्रीॐकारद्वयमध्यस्थः शिरश्चेतिमंत्रस्तस्यस्वरूपम् ॥ ॐभूः ॐभुवः ॐस्वः ॐमहः ॐजनः ॐतपः ॐसत्यंॐतत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयो नः प्रचोदयात् ॥ ॐआपोज्योतीरसोमृतंब्रह्मभूर्भुवः स्वरोम् ॥ ततः ॐसूर्य्यश्चमेतिब्रह्म ऋषिः प्रकृतिश्छंदः सूर्य्योदेवताअपामुपस्पर्शनेविनियोगः ॥ ॐसूर्यश्चमामन्युश्चमन्यु पतयश्चमन्युकृतेभ्यः पापेभ्यो रक्षंतां ॥ यद्रात्र्यापापमकार्षं ॥ मनसावाचाहस्ताभ्याम् पद्भ्यामुदरेणशिश्ना रात्रिस्तदवलुंपतु यत्किंचिद्दुरितंमयि इदमहम्मामममृतयोनौसूर्ये

ज्योतिषिजुहोमिस्वाहा ॥ इतिप्रातराचामेत् ॥ ॐआपः पुनंत्वितिविष्णुर्ऋषिरनुष्टुप्छं
दआपोदेवताअपामुपस्पर्शनेविनियोगः॥ॐआपःपुनंतुपृथिवींपृथ्वीपूतापुनातुमां॥पुनं
तुब्रह्मणस्पतिर्ब्रह्मपूतापुनातुमां ॥ यदुच्छिष्टमभोज्यंचयद्वादुश्चरितंमम ॥ सर्वंपुनंतुमा
मापोऽसतांचप्रतिग्रहꣳस्वाहा ॥ इतिमध्याह्नआचामेत् ॥ ॐअग्निश्चमेतिरुद्रऋषिःप्रकृ
तिश्छंदोग्निर्देवताअपामुपस्पर्शनेविनियोगः ॥ ॐअग्निश्चमामन्युश्चमन्युपतयश्चमन्यु
कृतेभ्यःपापेभ्योरक्षंतांयदह्नापापमकार्षंमनसावाचाहस्ताभ्यांपद्भ्यामुदरेणशिश्ना ॥ अ
हस्तदवलुंपतुयत्किंचिद्दुरितंमयि॥ इदमहम्मामममृतयोनौसत्येज्योतिषिजुहोमिस्वाहा॥
इत्यनेनसायमाचामेत् ॥ ततःॐआपोहिष्ठेत्यादित्तृचस्यसप्तभिः पदैःशिरसि अष्टमेन
भूमौ नवमेनापिशिरसि कुशत्रयेणजलंक्षिपेत्॥इदमेवमार्जनम् ॥ आपोहिष्ठेत्यादितृ
चस्यसिंधुद्वीपऋषिर्गायत्रीछंदआपोदेवतामार्जनेविनियोगः ॥ ॐ आपोहिष्ठामयोभुव
स्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ योवःशिवतमोरसस्तस्यभाजयतेहनः ॥ उश

तीरिवमातरः ॥ तस्माअरंगमामवोयस्यक्षयायजिन्वथ॥आपोजनयथाचनः ॥ततःकरेण जलमादायवारत्रयंद्रुपदांपठित्वातज्जलंशिरसिक्षिपेत् ॥ द्रुपदादिवेतिकोकिलोराजपुत्र ऋषिरनुष्टुप्छंदआपोदेवतासौत्रामण्यवभृथेविनियोगः ॥ ॐ द्रुपदादिवमुमुचानःस्वि न्नःस्नातोमलादिव ॥ पूतंपवित्रेणेवाज्यमापःशुन्धंतुमैनसइति ॥ ततःकरस्थंजलंनासा ग्रांसंयोज्यआयतासुरनायतासुर्वात्रिःसकृद्वाऽघमर्षणंजपेत् ॥ अघमर्षणसूक्तस्याघमर्ष णऋषिरनुष्टुप्छंदोभाववृत्तोदेवताअश्वमेधावभृथेविनियोगः ॥ ॐऋतंचसत्यंचाभीद्धा त्तपसोऽध्यजायत ॥ ततोरात्र्यजायतततःसमुद्रोअर्णवः ॥ समुद्रादर्णवादधिसंवत्सरोअ जायत ॥ अहोरात्राणिविदधद्विश्वस्यमिषतोवशी ॥ सूर्याचंद्रमसौधातायथापूर्वमकल्प यत् ॥ दिवंचपृथिवींचान्तरिक्षमथोस्वः ॥ ततःअन्तश्चरसीतितिरश्चीनऋषिरनुष्टुप्छंन्द आपोदेवताआचमनेविनियोगः ॥ ॐअन्तश्चरसिभूतेषुगुहायांविश्वतोमुखः ॥ त्वंयज्ञ स्त्वंवषट्कारआपोज्योतीरसोमृतामित्यनेनाचामेत् ॥ ततउत्थाय ॐ भूर्भुवःस्वरितिगाय

र्घ्याचपुष्पामिश्रंजलंसूर्याभिमुखंप्रक्षिपेत् ॥ ततो भूम्यलग्नगुल्फतलभागोवा भूमिलग्ना

द्वंचरणोवा भूमिलग्नैकचरणोवा प्रातःसायंच कृताञ्जलिर्मध्याह्नेऊर्ध्वबाहुःसूर्यंध्यायन्नुप

तिष्ठेत् एभिर्मंत्रैः ॥ उद्वयंतमित्यस्यहिरण्यस्तूपऋषिरनुष्टुप्छन्दः सूर्योदेवता सूर्योप

स्थानेविनियोगः ॥ ॐ उद्वयंतमसस्परिस्वः पश्यंतउत्तरम् ॥देवंदेवत्रासूर्यमगन्मज्योति

रुत्तमम् ॥ १ ॥ उदुत्यमित्यस्यप्रस्कण्वऋषिर्गायत्रीछन्दःसूर्योदेवतासूर्योपस्थानेविनि

योगः ॥ ॐउदुत्यंजातवेदसंदेवंवहंतिकेतवः ॥ दृशेविश्वायसूर्यं ॥ २ ॥ चित्रमित्यस्यकौ

त्सऋषिस्त्रिष्टुप्छंदः सूर्योदेवतासूर्योपस्थानेविनियोगः ॥ ॐ चित्रंदेवानामुदगादनीकं

चक्षुर्मित्रस्यवरुणस्याग्नेः ॥ आप्राद्यावापृथिवीअन्तरिक्षꣳसूर्यआत्माजगतस्तस्थुषश्च

॥ ३ ॥ तच्चक्षुरितिदध्यङ्ङाथर्वणऋषिरक्षरातीतपुरउष्णिक्छन्दःसूर्योदेवता सूर्योपस्था

नेविनियोगः ॥ ॐतच्चक्षुर्देवहितंपुरस्ताच्छुक्रमुच्चरत् ॥ पश्येमशरदः शतंजीवेमशरदः

शतꣳशृणुयामशरदः शतम्प्रब्रवामशरदःशतमदीनाः स्यामशरदः शतम्भूयश्चशरदःशता

त् ॥ ततः ॥ ॐ हृदयायनमः ॐभूः शिरसेस्वाहा ॐभुवः शिखायैवषट् ॐस्वः कवचाय
हुं ॐभूर्भुवः स्वः नेत्राभ्यांवौषट् ॐभूर्भुवःस्वः अस्त्रायफट् इत्यंगानित्रिरावर्त्यपूर्वोक्त
मृष्यादिकंस्मृत्वापूर्वोक्तरूपांगायत्रींध्यात्वा ॥ तेजोऽसीतिदेवाऋषयः शुक्रंदैवतं गायत्री
छंदो गायत्र्यावाहनेविनियोगः ॥ ॐ तेजोऽसिशुक्रमस्यमृतमसिधामनामासि प्रियं
देवानामनाधृष्टंदेवयजनमसीति गायत्रीमावाह्य ॥ ॐ गायत्र्यस्येकपदीद्विपदीत्रिपदी
चतुष्पद्यपदसिनहिपद्यसेनमस्तेतुरीयायदर्शतायपदायपरोरजसेसावदोमित्युपस्था
य ॥ प्रातःप्राङ्मुखोमध्याह्नेसूर्याभिमुखस्तिष्ठन् सायंपश्चिमाभिमुखउपविष्टउक्तविधि
नागायत्रींजपेत् ॥ जप्यस्वरूपंयथा ॥ ॐ भूर्भुवःस्वः ॥ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीम
हि ॥ धियोयोनःप्रचोदयात् ॥ ॐ ततः प्रणिपत्याविसर्जयेत्॥अथब्रह्मयज्ञः॥ तत्रकात्या
यनः ॥ विभ्राडित्यनुवाकपुरुषसूक्तशिवसंकल्पमंडलब्राह्मणैरित्युपस्थाय प्रदक्षिणीकृ
त्य नमस्कृत्योपविशेद्दर्भेषु दर्भपाणिः स्वाध्यायंचयथाशक्त्यादावारभ्यवेदं विभ्राडि

त्यादिनाऽऽदित्योपस्थानंकाम्यं मध्याह्नेचोदयेचैवविभ्राडादीच्छयाजपेदितिछंदोगपरि
शिष्टदर्शनात् ॥ स्वाध्यायंकुर्यादितिशेषः॥ यथाशक्तीत्यादिनास्वाध्यायलक्षणंवेदंपठेदि
तिशेषः ॥ तत्रापस्तम्बः॥यथाध्यायमुत्सृजन्वाचामनसाचाऽनध्यायेयथाध्यायमुत्सृजन्
यद्यदधीतंतत्तदपरित्यजन् ॥ वाचामनसाचेत्युभयत्र अधीयीतेतिशेषः ॥ एवंचानध्याये
मनसाध्ययनविधानान्नैत्यिकेनास्त्यनध्यायोब्रह्मसूत्रंहितत्स्मृतमितिमनूक्तंमानसविष
यमेव ॥ छंदोगपरिशिष्टे॥यश्चश्रुतिजपः प्रोक्तोब्रह्मयज्ञःसउच्यते ॥सचार्वाक्तर्पणात्का
र्यःपश्चाद्वाप्रातराहुतेः॥ वैश्वदेवावसानेवानान्यत्रर्त्तेनिमित्तकात्॥ऋतेनिमित्तकात् जल
स्थतर्पणादिनिमित्तंविना ॥ याज्ञवल्क्यः ॥ वेदाथर्वपुराणानिसेतिहासानिशक्तितः ॥ ज
पयज्ञार्थसिद्ध्यर्थंविद्यांचाध्यात्मिकींजपेत् ॥ अत्रेयंव्यवस्था ॥ समस्तवेदाध्यायिनाऽऽ
दावारभ्यवेदपाठेनस्वाध्यायःकरणीयः ॥ एकदेशाध्यायिनापुरुषसूक्तादिपवित्रपाठेन
॥ सावित्रीमात्राध्यायिनाप्रणवादिपाठेनेति ॥ अथतर्प्पणम् ॥ तत्रशातातपः ॥ तर्प्प

णंतुशुचिः कुर्यात्प्रत्यहंस्नातकोद्विजः ॥ देवेभ्यश्चऋषिभ्यश्चपितृभ्यश्चयथाक्रमम् ॥
प्रत्यहमितिवचनान्नित्याधिकारः ॥ तदुक्तंछंदोगपरिशिष्टे ॥ तस्मात्सदैवकर्त्तव्यमकुर्व
न्महतैनसा ॥ युज्यतेब्राह्मणः कुर्वन्विश्वमेतद्बिभर्त्तिहि ॥ विष्णुपुराणे ॥ शुचिवस्त्रधरः
स्नातोदेवर्षिपितृतर्पणं ॥ तेषामेवाहितीर्थेनकुर्वीतसुसमाहितः ॥ तेषांदेवर्षिपितृणाम्टषि
तीर्थमंगुल्यग्रमात्रमितिबौधायनप्रोक्तम् ॥ विष्णुः ॥ स्नातश्चार्द्रवासादेवर्षितर्पणमंभः
स्थएवकुर्यात् परिवर्त्तितवासाश्चेत्तीर्थमवतीर्य्य ॥ अंभःस्थएवेति छंदोगपक्षे ॥ कात्या
यनादिभिरुत्तीर्य्यैत्यनंतरंविधानात् ॥ स्थलाशौचपक्षेवा ॥ यदाहयोगियाज्ञवल्क्यः ॥
यत्राऽशुचि स्थलं वा स्यादुदके देवताः पितॄन् ॥ तर्पयेत्तु यथाकाममप्सु सर्वं प्रतिष्ठितम्
॥ फलार्थमपिजलेतर्पणमाहकार्ष्णाजिनिः ॥ आपोदेवगणाःसर्वेआपःपितृगणाःस्मृ
ताः ॥ तस्माज्जलेजलंदेयंपितृणांदत्तमक्षयम् ॥ तथा ॥ देवतानांपितृणांचजलेदद्याज्जलां
जलिं ॥ असंस्कृतप्रमीतानांस्थलेदद्याज्जलांजलिम् ॥ एवंचजलतर्पणपक्षेपि असंस्कृतप्र

मीतानांस्थलएवजलदानं ॥ अत्रचजलतर्पणपक्षेउपस्थानपर्यंतासंध्याजलेकरणीया त
तस्तर्पणमात्रं ततउत्तीर्यगायत्रीजपोब्रह्मयज्ञश्च ॥ तर्पणानंतरमपिब्रह्मयज्ञस्यनरसिंह
पुराणादौदर्शनात् ॥ वैश्वदेवावसाने वा सोऽस्तु ॥हारीतः॥ देवाश्चपितरश्चैवकांक्षंतिस
रितंप्रति ॥ अदत्तेतुनिराशास्तेप्रतियांतियथागतं ॥ अदत्तेउदकइतिशेषः ॥ पितृगाथा
सुयमः ॥ अपिनःसकुलेजायाद्योनोदद्याज्जलांजलीन् ॥ नदीषुबहुतोयासुशीतलासुवि
शेषतः ॥ शंखलिखितौ ॥ वापीतडागोदपानेषुसप्तपंचत्रीन्वापिंडानुद्धृत्यदेवपितृंस्तर्पये
त् ॥ अयंवाप्यादौयथासंख्यंसप्तपिंडाद्युद्धारोऽसामर्थ्यादिनास्नानाभावेऽपिकर्त्तव्यःत
र्प्पणांगत्वात् ॥ स्नानपक्षेऽपिस्नानस्यपूर्वप्रवृत्तत्वात्स्नानांगतर्प्पणेनैवप्रसंगात् स्वतं
त्रतर्प्पणाधिकारःसिद्धः ॥ अतोनपृथक्पिंडोद्धारएकप्रयोगत्वात् ॥ तदाहयोगियाज्ञव
ल्क्यः ॥ उपस्थानादियस्तासांमंत्रवान्कीर्त्तितोविधिः ॥ निवेदनान्तंतत्स्नानामित्याहु
र्ब्रह्मवादिनः ॥ उपस्थानमुरुंहीत्यादिमंत्रैः ॥ तासामपांनिवेदनं देवागातुविदइति मं

त्रेणवक्ष्यमाणम् ॥ एवंचमध्याह्नसंध्यायाःस्वतंत्रायाअपि स्नानप्रयोगांतर्भावः ॥ अत
एव लोकैः स्नानसंध्याकर्मणोर्नैरंतर्येणानुष्ठानं ॥ योगियाज्ञवल्क्यः ॥ आवाह्यपूर्वव
न्मंत्रैरास्तीर्य्यचकुशान्शुचीन् ॥ प्रागग्रेषुसुरान्सम्यग्दक्षिणाग्रेषुवैपितृन् ॥ पूर्ववत्त
र्पयेदितिसंबंधः ॥ तेनपितृतर्प्पणे ॐकारस्तृप्यतामितिचलक्ष्यते मंत्रैरुदीरतामवरइ
त्यादिभिः ॥ कल्पतरुकारस्तुपूर्ववन्मंत्रैर्याज्ञवल्क्यपूर्वसंहितायाः श्राद्धावाहनमंत्रैरा
वाह्येतिसंबंधमाह तदयुक्तम् ॥ योगिशास्त्रंचयत्प्रोक्तमितिसंहितांतराभिधानात् ॥ योगि
याज्ञवल्क्यसंहितैवपूर्वा ॥ यतः ॥ स्नानमब्दैवतैर्मंत्रैर्यत्त्वयोक्तंपुरानघेतिचग्रंथांतरमाह
अत्रापिपूर्वाध्यायेऽभिधानात् ॥ किंच ॥ विश्वेदेवासइत्यृचाउशन्तस्त्वेत्यृचेतिमंत्रद्वयस्यै
वावाहनविनियोगान्मंत्रैरितिबहुत्वंदुर्लभम् ॥ विश्वेदेवासइत्यादिमंत्रस्यब्रह्मादिप्रका
शनसामर्थ्यमपिनास्तीत्युक्तैवव्याख्या ॥ तथाकार्ष्णाजिनिरावाहनमंत्रमाह ॥ नाभि
मात्रेजलेस्थित्वाचिन्तयेदूर्ध्वमानसः ॥ आगच्छन्तुमेपितरइमंगृह्णंत्वपोंजलिम् ॥ एवंचदे

वावाहनमपिदेवाआगच्छंत्वितिकर्त्तव्यम् ॥ पित्रावाहनएवात्रमंत्रदर्शनादावाह्येत्यपित
त्परमेव ॥ यमः ॥ भूमौयदापोदीयंतेदाताचैवजलेस्थितः ॥ वृथातद्दीयतेतोयंनोपतिष्ठ
तिकस्यचित् ॥ एतेनजलस्थोजलएवतर्पणजलंप्रक्षिपेदित्युक्तम् ॥ स्थलस्थेनस्थलए
वत्यक्तव्यमित्याह ॥ शंखः ॥ नोदकेषुनपात्रेषुनक्रुद्धोनैकपाणिना ॥ नोपतिष्ठतितत्तोयंय
न्नभूमौप्रदीयते ॥ बौधायनमतेस्थलस्थेनापितर्पणजलंजलएवप्रक्षेप्तव्यम् ॥ वासःप
रिधानानन्तरमप्सुतर्प्पणविधानात् ॥ हरिहरस्तुजलसमीपस्थेनतर्प्पणजलंजलएवप्र
क्षेप्तव्यं ॥ यदाचोद्धृतजलेनतर्पणंतदैवस्थलेतर्पणजलप्रक्षेपः ॥ तद्विषयमेवप्रागग्रेषुसुरा
नित्याहतदयुक्तं ॥ उदकेनोदकंकुर्यात्पितृभ्यश्चकदाचन ॥ उत्तीर्य्यचशुचौदेशेकुर्य्यादुद
कतर्पणमितिशंखेनजलस्थतर्पणंनिवार्य्यशुचौदेशेतर्पणमितिविधायनोदकेष्वितिपुनरु
दकनिषेधस्तीरस्थस्यापिजलप्रक्षेपेकृतइतितन्मतेस्थलस्थेनसर्वत्रस्थलएवतर्पणजलंप्र
क्षेप्तव्यमिति॥बौधायनमतेस्थलस्थेनजलेजलस्थेनजलेप्रक्षेपइतिविकल्पएव॥सुमंतुः।

आकाशेतुक्षिपेद्वारिजलस्थोदक्षिणामुखः ॥ आकाशेजलोपर्य्येव ॥ योगियाज्ञवल्क्यः॥
यद्युद्धृतंप्रसिञ्चेद्वैतिलान्संमिश्रयेज्जले ॥ अतोऽन्यथातुसव्येनतिलाग्राह्याविचक्षणैः ॥
अस्यायमर्थः ॥ यद्युद्धृतोदकमादायतर्पणंकरोतितदाजलेतिलाःप्रक्षेप्तव्याः ॥ यदातुज
लाशयस्थोजलमादायतदावामहस्तेनातिलग्रहणम् ॥मरीचिः॥ तिलानामप्यभावेतुसुव
र्णरजतान्वितम् ॥ तदभावेनिषिंचेत्तुदर्भैर्मंत्रेणवापुनः ॥ अत्रपूर्वपूर्वाभावेउत्तरोत्तरविधि
रितिभ्रमोवाक्यांतरविरोधात्त्यक्तव्यः ॥ किंतुतिलादीनांसमुदितानामप्यभावेएकदेशो
पादानप्रदर्शनमिदम् ॥एवंच॥ विनारूप्यसुवर्णेनविनाताम्रतिलैः खगैः॥विनादर्भैश्चमं
त्रैश्चपितॄणांनोपतिष्ठतीतिशंखवचनं रूप्यादीनांसर्वेषामभावे नत्वेकदेशाभावेऽपि॥ सौ
वर्णेनतुपात्रेणराजतौदुंबरेणवाखड्गपात्रेणवाशंकुनापिउदकंपितृतीर्थेस्पृशन्दद्यादिति
शंखोक्तंसतिसंभवे ॥ शंकुः कीलकः ॥ सतुसुवर्णादिनिर्मितः प्रकृतत्वात् ॥ मध्योर्ध्वांगुलि
त्रयःकरः शंकुरितिकेचित् ॥ त्रींस्त्रीञ्जलांजलीन्दद्यादुच्चैरुच्चतरन्ततः ॥ गोशृङ्गमात्रमुद्धृ

त्यजलमध्येजलंक्षिपेत् ॥ अस्यार्थः ॥ पित्रादिषट्कांजलित्रयेउत्तरोत्तरवृद्धिःकर्त्तव्या ॥
गोश्रृङ्गमात्रमितितृतीयांजल्युच्चैस्त्वनिर्देशः ॥ जलमध्यइतिपक्षेजलप्राप्तानुवादः ॥ यो
गियाज्ञवल्क्यः ॥ दक्षिणेपितृतीर्थेनजलंसिंचेद्यथाविधि ॥ दक्षिणेनैवगृह्णीयात्पितृती
र्थसमीपतः ॥ दक्षिणकरइतिशेषः ॥ मरीचिः ॥ मुक्तहस्तेनदातव्यं मुद्रान्तत्रनदर्शयेत् ॥
मुद्रातर्जन्यंगुष्ठयोगेन पितृतीर्थावरोधः॥शंखलिखितौ॥नेष्ठकाचितेदेवपितॄंस्तर्पयेत्॥उ
शनाः॥नवेष्टिताशिरानकृष्णकाषायवासादेवपितृकार्यंकुर्यात् ॥ योगियाज्ञवल्क्यः॥ सव
र्णेभ्योजलन्देयमसवर्णेकदाचन ॥ मित्रत्वादिप्रसक्तजलदाननिषेधोयम्प्रकरणादिति ॥
नैतद्बलाद्भीष्मतर्पणनिषेधोयादितत्रप्रमाणमस्ति॥पारस्करः॥ब्राह्मणेननकर्त्तव्यंशूद्रस्यै
वौर्ध्वदैहिकं ॥ शूद्रेणवाब्राह्मणस्यविनापारशवात्क्वचित् ॥ ऊर्ध्वदैहिकमितिसामान्यप
रिग्रहाच्छ्राद्धादिपरिग्रहोपि ॥ पारशवोब्राह्मणाच्छूद्रायामुत्पन्नः तेनस्वपितुःकर्त्तव्यमि
त्यर्थः ॥ कात्यायनः ॥ ब्राह्मणन्तर्पयेत्पूर्वंविष्णुंरुद्रंप्रजापतिं देवांश्छन्दांसिवेदान्‌ऋषी

न्पुराणाचार्यान्गन्धर्वानितराचार्यान्संवत्सरंसावयवंदेवीरप्सरसोदेवानुरगान्नागान्सा
गरान्पर्वतान्सरितोमनुष्यान्यक्षान्रक्षांसि पिशाचान्सुपर्णान्भूतानिपशून्वनस्पतीनो
षधीर्भूतग्रामं चतुर्विधम् ॥ तृप्यतामित्योंकारपूर्वम् ॥ ततो निवीती मनुष्यान् ॥ सनकं
चसन्दनञ्चतृतीयञ्चसनातनम् ॥ कपिलश्चासुरिश्चैववोढुंपंचशिखन्तथा॥ ततोऽपसव्यं
तिलमिश्रंकव्यवाडनलंसोमंयममर्यमणमग्निष्वात्तान्सोमपान्बर्हिषदोयमांश्चैके ॥ य
मायधर्मराजायमृत्यवेचान्तकायच ॥ वैवस्वतायकालायसर्वभूतक्षयायच॥ औदुम्बराय
दध्नायनीलायपरमेष्ठिने॥ वृकोदरायचित्रायचित्रगुप्तायवैनमः॥ एकैकस्यतिलैर्मिश्रांस्त्रीं
स्त्रीन्दद्याज्जलांजलीन् ॥ यावज्जीवकृतंपापंतत्क्षणादेवनश्यति॥जीवत्पितृकोप्येतानन्यां
श्चेतरः॥ उदीरतामङ्गिरस आयन्तुन ऊर्जं पितृभ्यो येचेह मधुवाता इतितृचं जपन्प्रासि
ञ्चेत्तृप्यध्वमितित्रिर्नमोवइत्युक्त्वा मातामहाचार्य्यगुरुशिष्यर्त्विग्ज्ञातिबांधवानतर्पितादे
हाद्रुधिरंपिबंति ॥ पाठक्रमादेवपूर्वताप्राप्तौपूर्वमितिक्रमाभिधानात्प्रत्येकंब्रह्मादीनांतर्प

णत्वम् ॥ एवञ्चतृप्यतामित्योंकारपूर्वमितिचप्रत्येकमभिसम्बध्यते ॥ तदुक्तंयोगियाज्ञव
ल्क्येन ॥ अन्वारब्धेनसव्येनपाणिनादक्षिणेनतु ॥ तृप्यतामितिसेक्तव्यं नाम्नातुप्रण
वादिना ॥ अनारब्धेनपश्चाल्लग्नेन ॥ एवञ्चदेवतर्पणे ॐ ब्रह्मातृप्यतामित्यादिरूपम्
॥ बहुवचनान्तश्रुतदेवतासम्बन्धेनवार्थाद्बहुवचनम् ॥ पुराणानितरानित्याचार्यविशेष
णम् ॥ सावयवइतिसंवत्सरविशेषणम् ॥ साकांक्षत्वात् ॥ चतुर्विधइतिभूतग्रामविशेषण
म् ॥ ततोनिवीत्यभिधात् पूर्वमुत्सर्गसिद्धमुपवीतित्वमेव ॥ उक्तञ्चयोगियाज्ञवल्क्येन ॥
ब्रह्मादीनुपवीतीतुदेवतीर्थेनतर्पयेत् ॥ निवीतीकायतीर्थेनमनुष्यान्सनकादिकान् ॥
मनुष्यतर्पणमपि ॐ सनकस्तृप्यतामित्योंकारपूर्वमेव ॥ तृप्यतामितिसेक्तव्यमितिवा
क्यस्यतदुत्तरत्वात् ॥ ततोऽपसव्यमिति पितृधर्मोपलक्षणमेतत्॥तेनातऊर्ध्वंदक्षिणामुख
त्वमपि कव्यवाडादौदिव्यपितृतर्पणेस्वधानम इत्यादियोज्यम् ॥ नमस्कारस्वधान्विता
नितियाज्ञवल्क्यवचनात् ॥ पितृतर्पणेस्वधानमइतिहारिहरमते ॥ कव्यवाडनलइत्येका

देवतेतिकल्पतरुकारः ॥ तत्तुकव्यवाडादयइतिगोभिलाभिधानादयुक्तम् ॥ अतएवकाम
धेन्वादौकव्यवाडंनलमितिपाठः ॥ यमांश्चैकइतिमतान्तरेणाभिधानादनावश्यकत्वम् ॥
अतएवैकैकस्येत्यादिनापापक्षयरूपफलाभिधानम् ॥ नमइतिसर्वत्रचतुर्थ्यंतसंबंधः ॥
एतान्यमान् तेनयमतर्पणपर्यंतंजीवत्पितृकेणापिकर्त्तव्यं ॥ अन्यांश्चेतरःप्रमीतपितृकः
॥ अन्यान्स्वपित्रादीनपितर्पयेदित्यर्थः ॥ जीवत्पितृकस्यापिपितामहादितर्पणंपितृपा
तित्यपक्षे ॥ येभ्योवापिपितादद्यात्तेभ्योवापिप्रदापयेदितियाज्ञवल्क्यवचनात् ॥ अत्र
पित्रादितर्पणेअंजलित्रयंयमतर्पणप्रकृतत्वात् ॥ एवञ्चदिव्यपितृतर्पणेप्यंजलित्रयंतद्व
मेकत्वात् ॥ एकैकस्येतितत्रापिसम्बधात् ॥ ब्रह्मादितर्पणेमनुष्यतर्पणेचानुवृत्तौप्रमाण
भावादेकएवांजलिः ॥ केचिद्विष्णुपुराणकल्पे ॥ त्रिरपःप्रीणनार्थायदेवानामपवर्जयेदि
तिदर्शनात् देवतर्पणेऽप्यंजलित्रयमेवेत्याहुस्तदयुक्तम् ॥ पितॄन्मातामहानितिप्रतिपुरु
षमभ्यसेदितिच्छन्दोगपरिशिष्टेषट्पुरुषमात्रेआवृत्तिदर्शनात् ॥ एवञ्चस्त्रीतर्पणपक्षेप्ये

कएवाञ्जलिः ॥ त्रींस्त्रीन्जलाञ्जलीनितियमोक्तंषट्पुरुषमात्रगोचरमितिबोद्धव्यम् ॥ त
थाचएकैकमंजलिंदेवाद्वौद्वौतुसनकादयः ॥ अर्हंतिपितरस्त्रींस्त्रीन्स्त्रियोप्येकैकमंजलिं ॥
एवंचउदीरतामवरइत्यादिमन्त्रनवकस्यापित्रादित्रिकांजलिनवकेसम्बंधः ॥ जपन्मंत्रा
न्यथाक्रमामितियोगियाज्ञवल्क्यवचनात् ॥ प्रत्येकमंजलीनांदेयत्वान्मंत्राणामपि प्रत्ये
कंप्रकाशनसामर्थ्यात् सर्वत्रचसर्वान्वये आवृत्तिर्विकल्पोवास्यात् ॥ एवञ्चैकैकमन्त्रपा
ठानन्तरमेकैकांजलिदानम्मन्त्रान्तेकर्मादिसान्निपातनियमात् ॥ अतएवजपन्नितिवर्त्त
मानसामीप्यान्नतुमन्त्रपाठकालेएवजलसेकः गोत्राद्युच्चारणाभावप्रसङ्गात् ॥ नचमं
त्रात्प्राग्वाक्यमित्यापियुक्तम् ॥ त्यागार्थकत्वात् ॥ यदाहुर्वाक्यमात्रेणतर्पणमादौ उदीर
तामित्यादिमन्त्रैस्तुसेकमात्रम् ॥ पाठकालएवस्तोत्रमन्त्रवद्दृष्टार्थमिति ॥ तन्न ॥ कर्मा
न्तरकल्पनापत्तेः ॥ मन्त्रैश्चदेयमुदकमितिविरोधाच्च ॥ तृप्यध्वमितित्रिरितिपित्रादित्रयं
मिलितमुद्दिश्यतृप्यध्वमित्यनेनवारत्रयमुदकन्देयमित्यर्थः ॥ नतुपाठमात्रमेतत् ॥ अद्

ष्टार्थतापत्तेः ॥प्रसिंचेदित्यन्वयाच्च ॥ मातामहादित्रिकेतुनमोवइत्युक्त्वेत्यभिधानादेकवा
रमेवमन्त्रमुच्चार्यतर्पणम् ॥ प्रसिंचेदितिश्रवणाज्जलसेकमात्रंतर्पणमपिकुर्वन्ति ॥ नपितृ
नुद्दिश्यत्यागइतिभ्रमोहेयः ॥ नामगोत्रस्वधाकारैस्तर्प्याः स्युरनुपूर्वशइतियोगियाज्ञव
ल्क्येनत्यागस्यैवावगमात्॥एवञ्चदेवतर्पणेपित्यागएवतुल्यतयानिर्देशात्॥ कात्यायना
नुक्तमपिदेवतर्पणमनुष्यतर्पणयोर्मध्येऋष्यन्तरोक्तमरीच्यादितर्पणमपिकुर्वंति ॥ युक्त
श्चैतत् ॥ देवर्षिपितृतर्पणमितिप्रागुक्तत्वात्॥ अतएवयोगियाज्ञवल्क्यकल्पात्स्मृतिमहा
र्णवलिखितम्मरीच्यादितर्पणं ॥ पद्मपुराणाद्धरिहरेणोक्तं ॥कामधेनौ योगियाज्ञवल्क्य
वचनमेवालिखितं ॥ तथा ॥ षट्पुरुषतर्पणानन्तरंतेषांस्त्रियस्तर्प्यास्त्रीन्पितृतस्त्रीन्मातृतः
पत्न्यश्चापितृतर्पणामिति गोभिलवचनात् ॥ बौधायनेनापिपितृतर्पणानन्तरंमातृतर्पणं
ततोमातामहतर्पणन्ततोमातामह्यादितर्पणमुक्तम् ॥ शंखः ॥ स्नातःकृतजपोंतर्जानुरुद
ङ्मुखश्चादिव्येनतीर्थेनदेवानुदकेनतर्पयेत् ॥ अथकृतापसव्योदक्षिणामुखोंतर्जानुःपि

त्र्येणतीर्थेनपितृभ्योयथाश्राद्धंयथाप्रकाशमुदकन्दद्यात् ॥ पित्रेपितामहायप्रपितामहाय
मात्रेपितामह्यैप्रपितामह्यैआसप्तमात्पुरुषात्पितृपक्षेयावतांनामजानीयात् ॥ पितृपक्षा
णामुदकतर्पणंकृत्वागुरूणांकुर्यात् ॥ मातृपक्षाणांकृत्वासम्बंधिबान्धवानांकुर्यात् ॥ तेषां
कृत्वासुहृदांकुर्यात् ॥ अंतर्जानुर्मध्यकृतकरः उदङ्मुखश्चेतिचकारात्प्राङ्मुखतापि ॥ म
नुशातातपयोगियाज्ञवल्क्याः ॥ यदेषतर्पयत्यद्भिःपितॄन्स्नात्वाद्विजोत्तमः॥ तेनैवसर्वमा
प्नोतिपितृयज्ञक्रियाफलं॥ पद्मपुराणे॥ ब्रह्माणंतर्पयेत्पूर्वंविष्णुंरुद्रंप्रजापतिं ॥ देवाय
क्षास्तथानागागंधर्वाप्सरसोऽसुराः ॥ क्रूराःसर्पाःसुपर्णाश्चतरवोजृंभकाःखगाः ॥ वि
द्याधराजलाधारास्तथैवाकाशगामिनः॥ निराधाराश्चयेजीवाःपापेऽधर्मेरताश्चये॥ तेषा
माप्यायनायैतद्दीयतेसलिलंमया॥ कृतोपवीतीदेवेभ्योनिवीतीतुभवेत्ततः॥ मनुष्यांस्त
र्पयेद्भक्त्याऋषिपुत्रानृषींस्ततः ॥ सनकश्चसनंदनश्चतृतीयश्चसनातनः ॥ कपिलश्चासु
रिश्चैववोढुःपंचशिखस्तथा॥ सर्वेतेतृप्तिमायांतुमद्दत्तेनांबुनासदा॥ मरीचिमत्र्यंगिरसौ

पुलस्त्यंपुलहंक्रतुं ॥ प्रचेतसंवसिष्ठंचभृगुंनारदमेवच ॥ देवान्ब्रह्मऋषीन्सर्वांस्तर्पयेद
क्षतोदकैः ॥ अपसव्यंततः कृत्वासव्यंजानुचभूतले ॥ अग्निष्वात्तांस्तथासौम्यान्हविष्मंत
स्तथोष्मपान् ॥ सुकालिनोबर्हिषदस्तथाचैवाज्यपान्पुनः ॥ तर्पयेच्चपितॄन्भक्त्यासति
लोदकचंदनैः ॥ दर्भपाणिस्तुविधिनाप्रेतान्स्वाँस्तर्पयेत्ततः ॥ पित्रादीन्नामगोत्रेणतथामा
तामहानपि ॥ संतर्प्यभक्त्याविधिवदिमंश्लोकमुदीरयन् ॥ येबांधवाबांधवायेऽन्यज
न्मनिबांधवाः ॥ तेतृप्तिमखिलांयांतुयश्चास्मत्तोभिवांछति ॥ अत्रहारिहरः ॥ देवादीनां
ॐ देवास्तृप्यंतामित्यादिवाक्येनतर्पणं ॥ तेषामाप्यायनायैतदितितद्ध्यानमात्रंतदयु
क्तं ॥ श्रुतवाक्यंविहायवाक्यांतरकल्पनायाश्चायुक्तत्वात् ॥ तस्माद्यत्रब्रह्माणामित्या
दौवाक्यंनश्रुतंतत्रैवयोगियाज्ञवल्क्यवाक्याद्युक्तवाक्यपरिग्रहः ॥ निवीतीचभवेत्तत
इतिश्रवणादृषितर्पणेनिवीतित्वभ्रमोहेयः ॥ निवीतस्यमनुष्यधर्मतयातत्रतत्राभिधाना
त् ॥ केचित्तुअथनिवीतीऋषींस्तर्पयामीतिबौधायनदर्शनान्मरीच्यादितर्पणेनिवीतित्वमे

वाहुः ॥ अक्षतोदकैरित्यत्राक्षतपदंयवपरं ॥ यवाद्भिस्तर्पयेद्देवानितिपरिशिष्टदर्शनात् ॥
अत्रब्रह्मादिचतुष्टयं ॐ कारादिनातृप्यतामित्यंतेननाम्नादेवादीन्देवायक्षाइत्यादिना
दीयतेसलिलंमयेत्यंतेनउपवीती ॥ ततोनिवीतीसनकादीन्सनकश्चेत्यादिनासदेत्यंतेन
ततउपवीतीमरीच्यादीन्दशऋषीन् ॥ ॐ मरीचिस्तृप्यतामित्यादिनामांतेनएतान्सर्वा
न्यवमिश्रितजलैः ॥ ततःप्राचीनावीतीअग्निष्वात्तादीन् सप्तदिव्यापितृगणान् ॐ अ
ग्निष्वात्तास्तृप्यंतामिदंतिलोदकंतेभ्यः स्वधानमइतिरूपेण ॥ ॐ अद्यामुकगोत्रः पि
ताअमुकशर्मातृप्यतामिदंजलंसतिलंतस्मैस्वधा इत्यादिवाक्यैःषट्पुरुषान् ॥ ॐ अद्या
मुकगोत्रामाताअमुकदेवीतृप्यतामिदंजलंतस्यैस्वधा इत्यादिवाक्यैस्तेषांस्त्रियस्तर्पयि
त्वायेबांधवाइत्यादिश्लोकेनावसानांजलिंदद्यादितिप्रयोगः ॥ अथकातीयतर्पणप्रयोगः ॥
ॐ ब्रह्मातृप्यतां ॐ विष्णुस्तृप्यतां ॐ रुद्रस्तृप्यतां ॐ प्रजापतिस्तृप्यतां ॐ देवास्तृ
प्यंताम् ॐ छंदांसितृप्यंताम् ॐ वेदास्तृप्यंताम् ॐ ऋषयस्तृप्यंतां ॐ पुराणाचार्यास्तृ

प्यंता ॐ गंधर्वास्तृप्यंतां ॐ इतराचार्यास्तृप्यंतां ॐ संवत्सरःसावयवस्तृप्यताम् ॐ दे
व्यस्तृप्यंतां ॐअप्सरसस्तृप्यंताम् ॐ देवानुगास्तृप्यंताम् ॐ नागास्तृप्यंतां ॐ साग
रास्तृप्यंतां ॐ पर्वतास्तृप्यंतां ॐ सरितस्तृप्यंतां ॐ मनुष्यास्तृप्यंतां ॐ यक्षास्तृप्यंतां
ॐ रक्षांसितृप्यंतां ॐ पिशाचास्तृप्यंतां ॐ सुपर्णास्तृप्यंतां ॐ भूतानितृप्यंतां ॐ पशव
स्तृप्यंताम् ॐ वनस्पतयस्तृप्यंताम् ॐ ओषधयस्तृप्यंताम् ॐ भूतग्रामश्चतुर्विधस्तृप्य
तां इत्युपवीतीप्राङ्मुखउदङ्मुखोवादेवतीर्थवर्त्तिनायवोदकेनोदकेनैववातर्पयेत् ॥ तत
ॐ मरीचिस्तृप्यताम् ॐ अत्रिस्तृप्यताम् ॐ अंगिरास्तृप्यताम् ॐ पुलस्त्यस्तृप्य
तां ॐ पुलहस्तृप्यताम् ॐ क्रतुस्तृप्यताम् ॐ प्रचेतास्तृप्यताम् ॐ वसिष्ठस्तृप्यताम्
ॐ भृगुस्तृप्यताम् ॐ नारदस्तृप्यताम् इतिऋषीन्देववत् ततः ॐ सनकस्तृप्यताम् ॐ
सनंदनस्तृप्यतां ॐ सनातनस्तृप्यतां ॐ कपिलस्तृप्यतां ॐ आसुरिस्तृप्यताम् ॐ वोढु
स्तृप्यतां ॐ पंचशिखस्तृप्यतामितिमनुष्यान्निवीतीकायतीर्थेनोतिविशेषः॥ ततोपसव्यं

ॐ कव्यवाडस्तृप्यतामिदंतिलोदकंतस्मैस्वधानमः ॐ नलस्तृप्यतामिदंतिलोदकंतस्मै स्वधानमः ॐ सोमस्तृप्यतामिदंतिलोदकंतस्मैस्वधानमः ॐ यमस्तृप्यतामिदंतिलोदकं तस्मैस्वधानमः ॐ अर्यमातृप्यतामिदंतिलोदकंतस्मैस्वधानमः ॐ अग्निष्वात्तास्तृप्यंता मिदंतिलोदकंतेभ्यःस्वधानमः ॐ सोमपास्तृप्यंतामिदंतिलोदकंतेभ्यःस्वधानमः ॐ ब र्हिषदस्तृप्यंतामिदंतिलोदकंतेभ्यःस्वधानमः इतिदिव्यापितॄन्प्राचीनावीतीदक्षिणामुखः पातितवामजानुःसतिलजलांजलित्रयेणापितृतीर्थेनतर्पयेत् ततः ॐ यमायनमः ॐ धर्म राजायनमः ॐ मृत्यवेनमः ॐ अंतकायनमः ॐ वैवस्वतायनमः ॐ कालायनमः ॐ सर्वभूतक्षयायनमः ॐ उदुंबरायनमः ॐ दध्नायनमः ॐ नीलायनमः ॐ परमेष्ठिनेन मः ॐ वृकोदरायनमः ॐ चित्रायनमः ॐ चित्रगुप्तायनमः इतिचतुर्दशयमान्प्रत्येकं सतिलांजलित्रयेणतर्पयेत् ॐ आगच्छंतुमेपितरइमंगृण्हंत्वपोंजलिमितिपितॄनावाह्य ॐ उदीरतामवरउत्परासउन्मध्यमाः पितरःसोम्यासः ॥ असुंयईयुरवृकाऋतज्ञास्ते

नोवंतुपितरोहवेषु ॐ अद्यामुकगोत्रः पितामुकशर्मातृप्यतामिदंजलंसतिलंतस्मैस्वधे
तिमंत्रेणवाक्येनचप्रथममंजलिंपित्रेदद्यात् ॐ अंगिरसोनः पितरोनवग्वाअथर्वाणोभृ
गवःसोम्यासः॥ तेषांवयꣳसुमतौयज्ञियानामपिभद्रेसौमनसेस्यामइतिमंत्रेणवाक्येनच
द्वितीयांजलिंदद्यात् ॐ आयंतुनः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः॥ अ
स्मिन्यज्ञेस्वधयामदंतोधिब्रुवंतुतेवंत्वस्मानितिमंत्रेणवाक्येनचतृतीयांजलिंपित्रेदद्यात्
ॐ ऊर्जंवहंतीरमृतंघृतंपयःकीलालंपरिस्रुतं॥स्वधास्थतर्पयतमेपितॄन् ॐ अद्यामुकगो
त्रः पितामहोऽमुकशर्मातृप्यतामिदंजलंसतिलंतस्मैस्वधाइतिपितामहायप्रथमांजलिंद
द्यात् ॐ पितृभ्यः स्वधायिभ्यः स्वधानमः पितामहेभ्यःस्वधायिभ्यः स्वधानमः प्रपिता
महेभ्यः स्वधायिभ्यः स्वधानमः अक्षन्पितरोमीमदंतपितरोतीतृपंतपितरः पितरःशुं
धध्वमितिमंत्रेणवाक्येनचद्वितीयांजलिम् ॐ येचेहपितरोयेचनेहयांश्चविद्मयाꣳउचन
प्रविद्म॥ त्वंवेत्थयतितेजातवेदःस्वधाभिर्यज्ञꣳसुकृतंजुषस्व इतिमंत्रेणवाक्येनचतृतीयां

जलिम् ॐ मधुवाताऋतायतेमधुक्षरंतिसिंधवः॥माध्वीर्नःसंत्वोषधीः ॐ अद्यामुकगोत्रः प्रपितामहोऽमुकशर्मातृप्यतामिदंजलंसतिलं तस्मैस्वधाइतिमंत्रेणवाक्येनचप्रपिताम हायप्रथमांजलिंदद्यात् ॐ मधुनक्तमुतोषसोमधुमत्पार्थिवꣳरजः॥मधुद्यौरस्तुनः पिता इतिमंत्रेणवाक्येनचद्वितीयांजलिं ॐ मधुमान्नोवनस्पतिर्मधुमाँअस्तुसूर्यः ॥ माध्वीर्गा वोभवंतुनइतिमंत्रेणवाक्येनचतृतीयांजलिंप्रपितामहायदद्यात् ततः ॐ तृप्यध्वंतृप्यध्वं तृप्यध्वमितिपित्रादिभ्योंऽजलित्रयंदद्यात् ॐ नमोवः पितरोरसायनमोवः पितरः शो षायनमोवः पितरोजीवायनमोवः पितरः स्वधायैनमोवः पितरोघोरायनमोवः पितरो मन्यवेनमोवः पितरः पितरोनमोवोगृहान्नः पितरोदत्तसतोवः पितरोदेष्मैतद्वः पितरो वासइतिमंत्रंपठित्वा ॐ अद्यामुकगोत्रोमातामहोऽमुकशर्मातृप्यतामिदंजलं सतिलं त स्मै स्वधा इति मातामहायांजलित्रयं दद्यात् ॥ एवं प्रमातामहायवृद्धप्रमातामहाय च ॥ ततः ॐ अद्य अमुकगोत्रा माता अमुकदेवी तृप्यतामिदं जलं सतिलं तस्यै स्वधे

तिमातरम् ॥ एवमेव पितामहीप्रपितामहीमातामहीप्रमातामहीवृद्धप्रमातामहीस्तर्पये
त् ॥ ततः ॥ आचार्यादीन्नामगोत्रस्वधाकारैस्तर्पयेत् ॥ विष्णुपुराणे ॥ इदं चापि जपेदम्बु
ददद्यात्मेच्छयानृप ॥ उपकारायभूतानांकृतदेवादितर्पणः ॥ देवासुरास्तथायक्षानागाग
न्धर्वराक्षसाः॥ पिशाचागुह्यकाः सिद्धाः कूष्माण्डास्तरवःखगाः ॥ जलेचराभूनिलयावा
य्वाधाराश्चजन्तवः ॥ प्रीतिमेतेप्रयान्त्वाशुमद्दत्तेनांबुनाखिलाः ॥ ॐ नरकेषुसमस्तेषुया
तनासुचयेस्थिताः ॥ तेषामाप्यायनायैतद्दीयतेसलिलंमया ॥ ॐ येबान्धवाबान्धवावा
येऽन्यजन्मनिबान्धवाः ॥ तेतृप्तिमखिलांयांतुयश्चास्मत्तोऽभिवाञ्छति ॥ इदं च काम्यत
र्पणमेभिरेवश्लोकैर्दैवविधिनाकर्त्तव्यम् ॥ अत्रवसिष्ठः ॥ स्नानशाट्यांतुदातव्यामृदस्ति
स्त्रोविशुद्धये इति ॥ पराशरः ॥ जलमध्येतु यः कश्चिद्द्विजातिर्ज्ञानदुर्बलः ॥ निष्पीडय
तितद्वस्त्रंस्नानंतस्यवृथाभवेत् ॥ योगियाज्ञवल्क्यः ॥ अन्नप्रकरवत्तस्याप्यपसव्येनपीड
नम् ॥ पीडयित्वाततः पश्चाज्जपंकुर्यात्सुविस्तरम् ॥ अन्नप्रकरवत्श्राद्धोच्छिष्टसमीपान्न

विकिरवत् ॥ तेनदक्षिणामुखत्वादि असंस्कृतप्रमीततोद्देश्यत्वंच॥तथाचगोभिलीयोमंत्रः
येकेचास्मत्कुलेजाताअपुत्रागोत्रिणोमृताः॥ तेतृप्यंतुमयादत्तंवस्त्रनिष्पीडनोदकमिति॥
पीडयित्वेत्यादिनादर्शितोजपश्छंदोगविषयः कात्यायनादिभिरनभिधानात् गोभिलसं
वादाच्च॥हरिहरस्तुवाजसनेयिनांजपानंतरमेवैतदनुष्ठानेनैवाजपीपूयशोणितमित्यस्या
पिसिद्धिमाह अथतर्पणोत्तरकर्म तत्रविष्णुपुराणे॥आचम्यचततोदद्यात्सूर्यायसलिलांज
लिं॥नमोविवस्वतेब्रह्मन्भास्वतेविष्णुतेजसे॥जगत्सवित्रेशुचयेनमस्तेकर्मदायिने ॥का
त्यायनः॥निष्पीड्यवस्त्रमाचम्यब्राह्मवैष्णवरौद्रसावित्रमैत्रवारुणैस्तल्लिंगैरर्चयेत् ॐअ
द्दश्रमस्यह॰ सइत्युपस्थायप्रदक्षिणीकृत्यनमस्कृत्यदिशश्चदेवताश्च ब्रह्माग्निपृथिव्यौप
धिवाग्वाचस्पतिविष्णुमहद्भ्योऽपांपतयेवरुणायनमः इतिसर्वत्रसंवर्चसेतिमुखंविमृशेद्दे
वागातुविदइतिविसर्जयेदेप स्नानविधिः॥तल्लिंगैर्ब्रह्मादिप्रकाशकैरर्चयेदितिब्रह्मादीनि
तिशेपः॥ एगाचपूजापुष्पैरेव ॥ तथाचयोगियाज्ञवल्क्यः॥ध्यात्वाप्रणवपूर्वंतुदैवतंसुसमा

हितः ॥ नमस्कारेणपुष्पाणिविन्यसेत्तुपृथक्पृथक् ॥ कात्यायनेनाप्यादौसुमनसआहृत्ये
तिसूर्यांजलिदानार्थमेतत्पूजार्थंचपुष्पोपादानमुक्तं ॥ आवाहनमित्यादिविष्णुपूजाप्रका
रांतरंयोगियाज्ञवल्क्यमते ॥ एवंसावित्रैर्मंत्रैर्वारुणैरितिसावित्रादिमंत्रबहुत्वंतन्मतएव
कात्यायनेनब्रह्मादीनांसमासेनोक्तत्वात् ॥ एकैकपरत्वेपिबहुत्वोपपत्तेः॥दिशश्चेतिचकारा
न्नमस्कृत्येतिपूर्वत्रापिसंबध्यते ॥ देवतादिशमेवाऽत्रकेचित् ॥ श्रुतदिगादिशब्दमनादृत्य
प्राच्यादिपदेनदिङ्नमस्कारामिंद्रादिपदेनदिग्देवतानमस्कारंकुर्वंति ॥ब्रह्माग्नीत्यादौस
मासनिर्दिष्टेऽपिपृथङ्नमस्कार्यत्वंनमइतिसर्वत्राप्युपसंहारात् ॥ विष्णुमहद्भ्यइतितुमि
लितस्यैवनमस्कार्यत्वम् ॥ अद्भ्यइतिपृथगुपादानात् ॥ एषस्नानविधिरित्युपसंहारः॥ए
तत्पर्यंतंस्नानप्रयोगानुवृत्तेर्ज्ञापनार्थमेतच्चप्रागेवप्रपंचितं ॥ अथपूजादिप्रकारः॥ॐब्रह्म
जज्ञानंप्रथमंपुरस्ताद्विसीमतः सुरुचोव्वेनआवः॥ सबुध्न्याउपमाअस्यविष्ठाः सतश्चयो
निमसतश्चव्विवः ॐ ब्रह्मणेनमः ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपा

ऽसुरे ॐ विष्णवेनमः ॐ नमस्तेरुद्रमन्यवउतोतइषवेनमः॥बाहुभ्यामुततेनमः ॐ रुद्रा
यनमः ॐआकृष्णेनरजसावर्त्तमानोनिवेशयन्नमृतंमर्त्यंच॥हिरण्ययेनसवितारथेनादेवो
यातिभुवनानिपश्यन् ॐ सवित्रेनमः ॐ मित्रस्यचर्षणीधृतोवोदेवस्यसानासि द्युम्नंचि
त्रश्रवस्तमं ॐ मित्रायनमः ॐ इमंमेवरुणश्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचके ॐ
वरुणायनमः इतिब्रह्मादीन्संपूज्योत्थाय ॐ अदृश्रमस्यकेतवोविरश्मयोजनाँ॥अनु ॥
भ्राजन्तोअग्नयोयथा ॐहꣳसःशुचिषद्वसुरंतरिक्षसद्धोताव्वेदिषदतिथिर्दुरोणसत्॥नृष
द्वरसदृतसद्व्योमसदब्जागोजाऋतजाअद्रिजाऋतंवृहदित्याभ्यांसूर्यमुपस्थायप्रदक्षिणी
कृत्य ॐआदित्यायनमः इत्यादित्यंनमस्कृत्य ॐदिग्भ्योनमः ॐ दिग्देवताभ्योनमः ॐ
ब्रह्मणेनमः ॐ अग्नयेनमः ॐपृथिव्यैनमः ॐ ओषधिभ्योनमः ॐ वाचेनमः ॐवाचस्प
तयेनमः विष्णवेनमः महद्भ्योनमः अद्भ्योनमः अपांपतयेनमःवरुणायनमइतिनमस्कृत्य
ॐ संवर्चसापयसासंतनूभिरगन्महिमनसासꣳ शिवेन॥त्वष्टासुदत्रोव्विदधातुरायोनुमा

ष्टुंतन्वोपद्विलिष्टं इतिजपन्सजलकरद्वयेनमुखंसंस्पृश्य ॐ देवागातुविदोगातुंवित्वागा
तुमितमनसस्पतइमंदेवायज्ञ॑ स्वाहाव्वातेधाःइतिविसर्जयेत्॥अथ योगियाज्ञवल्क्यः
प्रक्षाल्यतीरदेशंतुगत्वास्वंधर्ममाचरेत्॥गत्वागृहमितिशेषः॥तथासंस्त्रवादिष्वथाचम्यसो
पानत्कोह्यसंस्पृशन्॥ आगतःसोदपात्रस्तुयत्नेनशुचिरेवसः॥ तेनोदकेनद्रव्याणिप्रो
क्ष्याचम्यतथागृहे॥ततःकर्माणिकुर्वीतनित्यंवैयानिकानिच॥पात्रादिरहितंतोयमुद्धृतंसव्य
पाणिना॥ नतेनप्रोक्षणंकुर्याद्वस्त्रनिष्पीडनेनच॥सौवर्णराजतंताम्रंमुख्यंपात्रंप्रकीर्त्तितं
तदभावेस्मृतंपात्रंस्त्रवतेयन्नधारितम्॥ शातातपः॥बहिर्नद्यादिष्वाचांतःसोदकःकिंचिद
स्पृशन्॥रथ्यागतोपियत्नेनशुचिरेवहिमानवः॥तथा॥नाधोवस्त्रैकदेशेनशुद्ध्यर्थमपआह
रेत्॥ यद्यानीतंतुसव्येनप्रोक्षयेद्दक्षिणेनतु॥पद्मपुराणे॥ आचम्यविधिवत्सम्यगालिखे
त्पद्ममग्रतः॥ अक्षताद्भिःसपुष्पाभिःसतिलारुणचंदनैः॥ अर्घपाद्येप्रयत्नेनसूर्यनामानु
कीर्त्तनैः॥नमोस्तुविष्णुरूपायनमस्तेब्रह्मचारिणे॥ सहस्त्ररश्मयेनित्यंनमस्तेसर्वतेजसे

नमस्तेरुद्रवपुषेनमस्तेभक्तवत्सल॥पद्मनाभनमस्तेस्तुकुंडलांगदभूषण॥नमस्तेसर्वलो
केशसुप्तानामपिबुध्यसे॥सुकृतंदुष्कृतंचैवसर्वंपश्यसिसर्वदा॥सर्वदेवनमस्तेस्तुप्रसीदम
मभास्कर॥दिवाकरनमस्तेस्तुप्रभाकरनमोस्तुते॥एवंरविंनमस्कृत्यात्रिःकृत्वाचप्रदक्षिणां
द्विजंगांकांचनंस्पृष्ट्वाततोविष्णुगृहंव्रजेत्॥आश्रयस्थंततःपूज्यप्रतिमांचापिपूजयेत्॥अ
क्षतमत्रतंडुलाः सूर्यार्चांतरेतथादर्शनात्॥अर्घपाद्येदातव्येइतिशेषः॥आश्रयस्थंजलस्थ
म्॥ अथदेवपूजा ॥ तत्रविष्णुपुराणेसूर्यांजलिमुक्त्वा ततोगृहार्चनंकुर्यादभीष्टसुरपूजनम्
जलाभिषेकंपुष्पाणांधूपादेश्चनिवेदनम् ॥ आदिपदेनगंधदीपनैवेद्यग्रहणं ॥ यमः॥ देव
माल्यापनयनंदेवागारसमूहनं ॥ स्नपनंसर्वदेवानांगोप्रदानसमंस्मृतं ॥ब्रह्मपुराणे ॥ दे
वानांप्रतिमायत्रघृताभ्यंगक्षमाभवेत् ॥ पलानितस्यैदेयानिश्रद्धयापंचविंशतिः॥ अष्टोत्त
रंपलशतंस्नानेदेयंचसर्वदा॥द्वेसहस्रेपलानांतुमहास्नानेचसंख्यया ॥ दातव्यंयेनसर्वासु
दिक्षुनिर्यातितद्धृतं ॥ब्रह्मांगलग्नंविप्रेभ्योवैष्णवंचप्रदीयते॥ रुद्रांगलग्नमग्नौचदहेत्सर्वंच

तत्क्षणात् शिष्टेभ्योप्यथदेवेभ्योयत्तुदीनेषुनिक्षिपेत्॥विप्रेभ्यस्तत्रतद्देयंब्रह्मणेयन्निवेदि
तम्॥वैष्णवंसात्वतेभ्यश्चभस्मांगेभ्यश्चशांभवं॥ सौरंमगेभ्यःशाकेभ्यस्तापिनेयन्निवेदि
तम्॥ स्त्रीभ्यश्चदेयंमातृभ्योयत्तुकिंचिन्निवेदितं ॥ भूतप्रेतपिशाचेभ्योयत्तुदीनेषुनिक्षिपे
त्॥ प्रतिमेत्युपलक्षणं॥ तेनलिंगेपीयमेवाभ्यंगादिद्रव्यसंख्या ॥ यद्यपिघृतंप्रकृतंतथा
पिदुग्धादिस्नानेपीयमेवव्यवस्था एतच्चभाविष्यत्पुराणोक्तं॥ ब्रह्मांगलग्नमित्यादिनास्ना
नघृतादिप्रतिपत्तिः॥ विप्रेभ्यस्तथेत्यादिनादत्तनैवेद्यादिप्रतिपत्तिः सात्वतोव्रात्याद्वैश्या
दीत्यधिकृत्य ॥ पंचमःसात्वतोनामविष्णोरायतनानिच ॥ पूजयत्याज्ञयाराज्ञोयादिस्या
त्संयतेंद्रियः॥ इतिब्रह्मपुराणएवदर्शितः॥ तापिनेबुद्धाय॥ एतत्तुतिथिकृत्यादौयत्रबुद्धपू
जाविहितातत्परमिदं ॥ मातृभ्यइतिदेवीमात्रोपलक्षणम्॥ पूजाधारमाहशातातपः॥
भूमावप्सुतथाग्नौचदिविसूर्यैचदेवता॥ तथा॥ अप्सुदेवामनुष्याणांदिविदेवामनीषिणा
म्॥ काष्ठलोष्टेषुमूर्खाणांमुक्तस्यात्मनिदेवताः॥ व्योमसूर्यपूजायांलिंगंशिवपूजायां॥प्र

तिमासर्वदेवानामितिस्थानान्तरोक्तं ॥ देवीपुराणे ॥ शुचिवस्त्रधरःप्राज्ञोमौनीध्यानपरा
यणः ॥ गतकामभयद्वंद्वोरागमात्सर्यवर्जितः ॥ आत्मानंपूजयित्वातुस्त्रग्गंधसितवाससा
॥ सुमुहूर्त्तेयजेद्देवान्स्वकीयासनसंस्थितान् ॥ आहूयचार्घपाद्यादिहेमपात्रेणदापयेत् ॥
रक्तबिल्वाक्षतैः पुष्पैर्दधिदूर्वाकुशैस्तिलैः ॥ सामान्यः सर्वदेवानामर्घोऽयंपरिकीर्त्तितः ॥
अभावाद्दधिदूर्वादेर्मानसंवाप्रकल्पयेत् ॥ सुमूहर्त्तइतिविहितपूर्वाह्णादिकालपरं ॥ रक्तंकुं
कुमामितिकल्पतरुकारः॥अक्षतानामतंडुलाः ॥ सूर्यविष्णुशिवदुर्गाणांसामान्यतःपंचोप
चाराः ॥ चंदनागुरुकर्पूरकुंकुमान्यनुलेपने ॥ पुष्पाणि गिरिवनस्ववाटिकासंभवानि सुगं
धीनि स्वयंविकसितानि केशकीटरहितानि ॥अपर्युषितानि स्वयमपतितानि ॥ अखंडा
नि आर्द्राणि च प्रोक्षितानि पत्राण्यपीदृशानि निर्गंधीन्यपीतिविशेषः ॥ धूपेगुग्गुलुः ॥
सघृतः केवलोवाकृष्णागुरुर्वा ॥ दीपेघृतंतैलं नैवेद्येभक्ष्यभोज्यकंदमूलफलान्नपानका
दीनि ॥ फलंपक्वमक्कथितंकृम्यविद्धं ॥ पक्वान्नंवैश्वदेवार्थमग्रमुद्धृत्यदातव्यम् ॥ प्रतिदेवं

स्नानादिविशेषाः पंचोपचारविशेषाश्च जपस्तुतिप्रदक्षिणाप्रणामविसर्जनविशेषाश्च वि
स्तरतयानलिखिताः ॥ इदानींनिषेधाः॥तत्रनरसिंहपुराणेशंतनुंप्रतिनारदवाक्यं॥अतः
प्रभृतिनिर्माल्यंमालंघयमहीपते ॥ नरसिंहस्यदेवस्यअन्येषांचदिवौकसां ॥ भविष्यपु
राणे॥ यथानलंघयेत्कश्चित्स्नपनंभास्करस्यच॥ तथाकार्यंप्रयत्नेनलंघितंह्यशुभावहं॥
तामिस्रंनरकंकर्त्तालंघयेद्यः सरौरवम्॥ देवीपुराणे ॥ वस्त्वंगुलिविहीनंतुनपात्रंकारये
त्क्वचित्॥ नक्वचिदितिस्नानादौनिषेधः॥ बौधायनः ॥ परिहितमधिरूढमप्रक्षालितंप्रा
वरणंमललुलितंमनुष्यसंगतंतद्देवतायैनसंयुज्यात्॥ लघुहारीतः॥ स्नानंकृत्वातुयेकेचि
त्पुष्पंगृह्णंतिवैद्विजाः ॥ देवतास्तन्नगृह्णंतिभस्मीभवतिदारुवत् ॥ देवीपुराणे ॥ शिवेवि
र्जयेत्कुंदमुन्मत्तंचहरेस्तथा ॥ देवीनामर्कमंदारौसूर्यस्यतगरंतथा ॥ दुर्गायामर्कमंदार
योर्विहितत्वाद्देवीपदंतदितरपरम्॥ सूर्यस्यात्रतगरप्रतिषेधात् ॥ कुब्जकस्तगरश्चेतिभ
विष्यत्पुराणीयोविधिः केवलविहिताभावे ॥ एवमन्यत्रापिकेवलविहिताभावे विहितनि

षेधोपादानम् ॥ भविष्यपुराणे ॥ कृष्णलोन्मत्तकंकांचीतथाचगिरिकर्णिका ॥ नकंटकारि
कापुष्पंतथान्यद्गंधवर्जितम् ॥ नचाम्रातकजैः पुष्पैरर्चनीयोदिवाकरः ॥ कृष्णलाकरंजनी
तिप्रसिद्धा ॥ कांचीवराही ॥ गिरिकर्णिकाअपराजिता ॥ कंटकारिकाविहितापिविष्णुपू
जायां॥वामनपुराणे॥सुरभीणितथान्यानिवर्जयित्वातुकेतकीम्॥ केतक्यशोकचंपकैरिति
नरसिंहपुराणीयोविधिः॥ काम्यपूजायांनरसिंहमूर्त्तौवा ॥ शिवपूजायांभविष्यपुराणे ॥
केतकीचातिमुक्तश्चकुंदोयूथीमदंतिका ॥शिरीषसर्जबंधूककुसुमानिविवर्जयेत् ॥ अंकोल
पत्रकुसुमंकरंजेंद्रतरूद्भवं ॥ बिभीतकानिधन्वानिकुसुमानिविवर्ज्जयेत् ॥ निर्गंधीन्युग्रग
धीनिकुसुमानिविवर्ज्जयेत् ॥ गंधहीनमपिग्राह्यंपवित्रंयत्कुशादिकम्॥अतिमुक्तोमाधवी
लता ॥ मदंतिकायूथ्यनुकारिपुष्पं ॥ इन्द्रतरुः सिंदुवारः ॥ तथा ॥ नसल्लकीजं नाक्षोटं
नशुक्लागुरुसंभवम् ॥ दद्यादर्कायधर्मात्माधूपमाराधनोद्यतः ॥ अक्षोटंगिरिजपीलुप्रभ
वम् ॥ तथासूर्य्यदीपाधिकारे तांश्चदत्वानहिंसेतनतैलपरिवर्ज्जनात् ॥ कुर्वीतदीपहर्त्तांच

मूषकोंधश्चजायते ॥विष्णुः॥ननक्तंगृहीतेनोदकेनदेवकार्यंकुर्यात् ॥ चंदनकुंकुमागुरुकर्पू
रमृगमदजातीफलवर्ज्जमनुलेपनंनदद्यात् ॥ नवासोनीलंरक्तं॥ नमणिसुवर्णयोः प्रति
रूपमलंकरणं ॥ नोग्रगंधपुष्पं॥ नागंधि नकंटकिजं कंटकिजमपिशुक्लंसुगंधियत्तद्दद्या
त् ॥ नरक्तंदद्यात् रक्तमपिकुंकुमंजलजंदद्यात् ॥ नधूपार्थंजीवजातंनघृततैलंविनाकिंच
नदीपार्थे नाभक्ष्यंनैवेद्यार्थे भक्ष्येष्वपिअजामहिषीक्षीरं पंचनखमत्स्यवराहमांसानिच
प्रयतःसन्शुचिर्भूत्वासर्वमेवनिवेदयेत् ॥ तन्मनाःसुमनाभूत्वारागक्रोधविवर्जितः ॥कुंकु
मंजलजंचेतिविहितरक्तपुष्पोपलक्षणं॥ तेनऋष्यंतरोक्तान्यपिशमीकुशपलाशाशोककर
वीरपाटलपारिभद्रपुष्पाणिदेयानि ॥ एतेचनिषेधाविष्णुपूजामुपक्रम्याविष्णूक्ताइतितत्रै
वनिबंधकर्तृभिर्लिखिताः ॥ अत्राहुर्देवकार्यमितिसामान्यवचनात्सर्वविषयत्वं ॥ नचदेव
पदंविष्णुपरं संकोचापत्तेः ॥ प्रकरणादेवविष्णुप्राप्तौवैयर्थ्यापत्तेश्च ॥ तस्मात्पूर्वाध्यायेनै
वविष्णुपूजाकथनंनरक्तमित्यध्यायांतरंसामान्यविषयमिति ॥ कालिकापुराणे ॥शिवंभा

स्करमग्निंचकेशवंकौशकीमपि ॥ चेतसानर्च्चयन्यातिदेवलोकादधोगतिं ॥ कौशिकीदुर्गा
॥ भविष्यपुराणे ॥ सदायजन्तियज्ञेनसदादानंददन्तिच ॥ सदाचवायुभक्षास्तेनित्यंयेर्चं
तिभास्करम् ॥ नरसिंहपुराणे ॥ यस्तुपूजयतेनित्यंनरसिंहंसुरेश्वरम् ॥ सस्वर्गमोक्षभा
गीस्यान्नात्रकार्याविचारणा ॥ भविष्यपुराणे ॥ नहिलिङ्गात्परंकिञ्चित्पुण्यमभ्यधिकंक्व
चित् ॥ इतिविज्ञाययत्नेनपूजनीयःसदाशिवः ॥ तथा ॥ दुर्गार्च्चनरतोनित्यंमहापातकस
म्भवैः॥ दोषैर्नलिप्यतेवीरपद्मपत्रमिवाम्भसा॥ अत्रच क्रमानभिधानेऽपिसूर्यपूजाप्राथ
म्यमाचारात् ॥ सूर्यार्घ्यप्राथम्यन्तुविष्णुपुराणपद्मपुराणयोर्व्यक्तमेव ॥नरसिंहपुराणे॥
॥ ब्रह्मयज्ञानन्तरमुक्तम् ॥ ततोर्घम्भानवेदद्यात्तिलपुष्पजलान्वितम् ॥ उत्थाप्यमूर्द्धपर्य
न्तंहंसः शुचिषदृचा ॥ जलदेवंनमस्कृत्यततोगृहगतःपुमान् ॥ विधिनापुरुषसूक्तस्यत
त्रविष्णुंसमर्चयेत् ॥ वैश्वदेवन्ततःकुर्याद्बलिकर्मयथाविधि ॥ अथवैश्वदेवबलिकर्मणी ॥
तत्रवाजसनेयिगृह्यम् ॥ वैश्वदेवादन्नादुद्धृत्यपर्युक्ष्यस्वाहाकारैर्जुहुयात् ॥ ब्रह्मणेप्र

जापतयेगृह्येभ्यःकश्यपायानुमतयेइतिभूतगृह्येभ्यःमणिकेत्रीन्पर्जन्यायाद्भ्यःपृथिव्यै
धात्रेविधात्रेचद्वार्ययोः प्रतिदिशंवायवेदिशाञ्च मध्येत्रीन्ब्रह्मणेऽन्तरिक्षायसूर्याय वि
श्वेभ्योदेवेभ्योविश्वेभ्योभूतेभ्यस्तेषामुत्तरतः उषसेभूतानांपतयेचापरम् पितृभ्यःस्वधा
नमइतिदक्षिणतः ॥ पात्रंनिर्णिज्योत्तरापरस्यान्दिशिनिनयेद्यक्ष्मैतत्तेइति ॥ वैश्वदेवादि
त्यत्रव्यपदेशः ॥ विश्वेदेवताकबलिसम्बंधात् ॥ यद्यपिदेवतान्तरमपिवक्ष्यति ॥ तथा
प्येकदेशेनव्यवहारः ॥ अतएवहोमेप्यस्मिन्वैश्वदेवपदम् गौतमादिकल्पेहोमेपिविश्वे
देवसम्बन्धात् ॥ अन्नाद्गृहीत्वेतिशेषः ॥ पर्युक्ष्य अग्निमितिशेषोविष्णवादिसंवादात् ॥ एवं
पर्युक्षणस्वाहाकारस्यचहोमसामान्यधर्मतयोक्तस्यापिपुनरुपादानम् ॥ एषएवविधिर्य
त्रक्वचिद्धोमइत्यत्रग्रन्थेइतरसामान्यधर्मनिषेधार्थम् ॥ ब्रह्मणइत्यादिनाप्रत्येकंहोमदेव
तानिर्देशः ॥ अनुमतयइतिइतिकारोहोमसमाप्त्यर्थः ॥ त्रीन्बलीनितिशेषः ॥ भूतगृह्यावि
वरणेपर्जन्यायाद्भ्यःपृथिव्यै ॥ इतितेनतत्पदेनैवबलिदानमितिसिद्ध्यति ॥ द्वार्ययोर्द्वारद

क्षिणवामप्रदेशयोः ॥ प्रतिदिशंगृहस्यपूर्वदक्षिणपश्चिमोत्तरासुदिक्षु ॥दिशामासामेव ॥
चकारात्प्रतिदिशमितिसंबध्यते ॥मध्येगृहस्यब्रह्मणइत्यादित्रयं ॥त्रीनित्यत्रदेवताभिधा
यकं ॥ तेषांब्रह्मादिबलीनामुत्तरतउत्तरस्यांदिशि ॥ अपरमंतिमंतेनविश्वेदेवादिबलयउ
त्तरस्यांदिशि उत्तरोत्तरंदातव्याइतिसिध्यति ॥ उत्तरापरावायवीदिक् ॥अत्रवदंति ॥ अ
यंविधिः साग्नेरेव ॥ अनग्नेर्गौतमेनोक्तोहोमः ॥ शाकलएवच ॥ अनाहिताग्नेरप्येषयुज्य
तेबलिभिःसहेतिवाक्येनिरग्नेः प्रकारान्तराभिधानात् ॥ नचच्छन्दोगपरिशिष्टेश्रवणा
च्छंदोगविषयंप्रकारान्तरं ॥ सर्वशाखाप्रत्ययमेककर्मेतिन्यायेनसर्वगोचरत्वात् ॥किञ्च॥
यदीदंछन्दोगविषयंतदानिरग्निवाजसनेयिनांवैश्वदेवोनस्यादेवप्रापकाभावात् ॥ किञ्च
मणिकेत्रीनितिश्रवणान्निरग्नेश्चमणिकाभावात्साग्निविषयतेति ॥ तदयुक्तं ॥ वैश्वदेवमप्र
कुर्वीतस्वशाखाविहितन्नरः ॥ इति व्यासवाक्यात्पारशाखिकवैश्वदेवानुष्ठानायोगात् ॥
॥ किञ्च ॥ यद्यपिसर्वशाखाप्रत्ययमेककर्मतथापिस्वशाखाविहितकर्मविहायनान्यशा

खीयानुष्ठानम्॥ यत्तुकर्मस्वशाखायान्नविहितंस्वशाखाविहिताविरुद्धंतत्पारशाखिकम
प्यनुष्ठेयम्॥ तदुक्तंछन्दोगपरिशिष्टे॥ स्वशाखाश्रयमुत्सृज्यपरशाखाश्रयञ्चयः॥ कर्त्तु
मिच्छतिदुर्मेधामोघंतत्तस्ययत्कृतम्॥ यन्नाम्नातंस्वशाखायांपारक्यमविरोधियत्॥ वि
द्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवदिति॥ शाखोक्तोऽयंविशेषः॥ गृह्योक्तोऽयमितिचेत्॥
नस्वशाखाश्रयमितिस्वशाखानुगतमात्रत्वविवक्षितत्वात्॥ बह्वल्पंवास्वगृह्योक्तंयस्यय
त्कर्मकीर्तितम्॥ तस्यतावतिशास्त्रार्थेकृतेसर्वंकृतम्भवेत्॥ इतिगृह्यपरिशिष्टे॥ तत्रापि
विशेषविधानाच्च॥ तस्मान्निरग्निवाजसनेयिनामपिस्वगृह्योक्तएवकल्पइतिमणिकस्यो
दपात्रस्यचलौकिकत्वादनग्निनाप्युपादानमस्तु॥ अनग्निपक्षेवाउदकुम्भएवास्तु॥
अद्भ्यउदकुम्भइतिगौतमाभिधानात्॥ उदपात्रमात्रोपलक्षणंवामाणिकपदम्॥ उदपा
त्रसन्निधावित्यापस्तम्बवचनात्॥ नचप्रापकाभावः॥ सामान्यविधेरेवप्रापकत्वात्॥ त
थाचोद्वाहानन्तरम्॥संवर्त्तः॥ ततःपञ्चमहायज्ञान्कुर्यादहरहर्द्विजः॥नहानयेततान्प्राज्ञः

श्रूयन्तेहिश्रुतावपि ॥ शतपथश्रुतिः ॥ पञ्चैवमहायज्ञास्तान्येवमहासत्राणि ॥ भूतयज्ञो
मनुष्ययज्ञःपितृयज्ञोदेवयज्ञोब्रह्मयज्ञइत्यहरहर्भूतेभ्योबलिंहरेत् ॥ तथैनम्भूतयज्ञंस
माप्नोत्यहरहर्दद्यादुदपात्रात्तथैनंमनुष्ययज्ञंसमाप्नोत्यहरहः स्वधांकुर्यादुदपात्रात्तथैनं
पितृयज्ञंसमाप्नोत्यहरहः स्वधांकुर्यादुदपात्रात्तथैनंपितृयज्ञंसमाप्नोत्यहरहः स्वाहाकु
र्यादाकाष्ठात्तथैनंदेवयज्ञंसमाप्नोत्यऽथब्रह्मयज्ञःस्वाध्यायोवैब्रह्मयज्ञस्तस्यवाएतस्यब्र
ह्मयज्ञस्यवागेवजुहूर्मनउपभृच्चक्षुर्ध्रुवामेधास्रुवः सत्यमवभृथःस्वर्लोकउद्गायनं ॥ याव
त्तंहवाइमांपृथिवींवित्तेनपूर्णांददल्लोकंजयति त्रिस्तावन्तंजयतिभूयासंवाक्षय्यंयएवंवि
द्वानहरहःस्वाध्यायमधीतेतस्मात्स्वाध्यायोऽध्येतव्यः ॥मनुः ॥ पञ्चसूनागृहस्थस्यचूल्ही
पेषण्युपस्करः ॥ कण्डनीचोदकुम्भश्चवध्यतेयांस्तुवाहयन् ॥ तासांक्रमेणसर्वासांनिष्कृ
त्यर्थंमहात्मभिः ॥ पञ्चक्लृप्तामहायज्ञाःप्रत्यहंगृहमेधिनां ॥ अध्यापनंब्रह्मयज्ञः पितृय
ज्ञस्तुतर्पणं ॥ होमोदैवोबलिर्भौतोनृयज्ञोऽतिथिपूजनं॥सूनाप्राणिवधस्थानं॥ उपस्करः

संमार्जनी ॥ गृहोपकरणंभांडकुंभाडादीत्यपरे ॥ वध्यतेहंतीत्यर्थे आर्षत्वात् ॥ अथवाव
ध्यतेहिंसाजन्यदुरितेनसंबध्यतेहन्यतेवेत्यर्थः ॥ वाहयन्प्रवर्त्तयन् ॥ तासामित्यादिनाए
तत्पापक्षयार्थंपंचमहायज्ञाइत्युक्तम् ॥ एतच्चार्थवादमात्रम् ॥ श्रुतावहरहः श्रुतेर्जीवद
धिकारावगमात् ॥ अत्रापिप्रत्यहमितिश्रवणाच्च ॥ अथवाअर्थवादात्सूनाजनितपापक्ष
योऽपि॥एवंचस्वर्गापवर्गयोःसिद्धिंपाकयज्ञैः प्रचक्षतइतिव्यासादपिफलांतरमिति प्रत्ये
कमपिफलमस्ति ॥ तथाचहारीतः ॥ यद्देवेभ्योजुहोतिदेवलोकंतेनजयतियत्पितृभ्योद
दातिपितृलोकंतेनजयतियत्स्वाध्यायमधीते ऋषिलोकंतेनजयतियद्भूतेभ्योबलिंहरति
भूतलोकंजयतीति ॥ मनुश्च ॥ धन्यंयशस्यमायुष्यंस्वर्ग्यंचातिथिपूजनं ॥ पितृयज्ञप्र
कारांतरंछंदोगपरिशिष्टे ॥ श्राद्धंवापितृयज्ञःस्यात्पितृभ्योबलिरेववा॥पंचयज्ञप्रकारांतर
माहुर्मनुविष्णुदेवलाः ॥ देवतातिथिभूतानांपितॄणामात्मनश्चयः॥ननिर्ववतिपंचानामुच्छ्व
सन्नसजीवति॥तदेषांवाक्यानासामान्यविषयतयासाग्निनिरग्निगृहस्थमात्रविषयमेव ॥

नचमन्वादिभिर्वैश्वदेवहोमेआवसथ्याग्निविधानादनग्नेरनधिकारः ॥ लौकिकेवैदिकेवा
पिहुतोच्छिष्टेजलेक्षितौ॥वैश्वदेवंप्रकुर्वीतपंचसूनापनुत्तये ॥ इतिशातातपेनाधारांतरस्या
पिविहितत्वात् ॥ वैदिकेआवसथ्याग्नौ ॥ हुतोच्छिष्टेअन्येनहोमंकृत्वात्यक्ते ॥ आङ्गिराः ॥
शालाग्नौतुपचेदन्नंलौकिकेवापिनित्यशः ॥ यस्मिन्नग्नौपचेदन्नंतस्मिन्होमोविधीयते ॥
इति ॥ अस्यार्थः ॥ साग्निनापाकोहोमश्चावसथ्याग्नावेवकर्त्तव्यः॥निराग्निनालौकिकइति
॥ छन्दोगपरिशिष्टे ॥ पाण्याहुतिर्द्वादशपर्वपूरिकाद्रवादिनाचेत्स्रुवमात्रपूरिका॥दैवेन
तीर्थेनचहूयतेहविःस्वङ्गारिणिस्वर्चिपितच्चपावके ॥ तथा ॥ हविष्येषुयवामुख्यास्तदनु
व्रीहयःस्मृताः ॥ मापकोद्रवगौरादीन्सर्वाभावेऽपिवर्जयेत्॥ गौरःसितसर्षपः ॥ आदिप
देनचणकमाषमसूरकुलत्थोद्दालवर्ज्यमितिशङ्खलिखितोक्तपरिग्रहः ॥ आपस्तम्बः ॥ न
क्षारलवणंहोमेविद्यते ॥ तथापरान्नस्पृष्टस्यचहविष्यस्यनहोमः ॥ तथानस्त्रीजुहुयान्ना
नुपनीतः ॥ एतत्साग्नेःप्रवासेऋत्विगसन्निधानेसति ॥ अन्यत्रप्रसक्त्यभावात् ॥ निरग्ने

स्तुस्वकर्तृकएववैश्वदेवः ॥तथा॥ आर्याःप्रयतावैश्वदेवान्नस्यसंस्कर्त्तारः भाषांकासंक्षव
थुमित्यभिमुखोन्नंवर्जयेत् ॥ केशानंगवासश्चालभ्यापउपस्पृशेत् ॥ आर्यास्त्रैवर्णिकाः ॥
॥ आपस्तम्बः ॥ भोजनंहवनन्दानमुपहारःप्रतिग्रहः ॥ बहिर्जानुनकार्याणितद्वदाचम
नंस्मृतम्॥ छन्दोगपरिशिष्टे॥जुहूषुश्चहुतेचैवपाणिशूर्प्पास्यदारुभिः॥नकुर्यादग्निधमनं
कुर्याच्चव्यजनादिभिः ॥ मुखेनैवधमेदग्निंमुखादेषव्यजायत ॥ नमुखेनेतियच्चोक्तंलौकिके
योजयन्तिततत् ॥ वायुपुराणे ॥ दानम्प्रतिग्रहोहोमोभोजनम्बलिरेवच ॥ सांगुष्ठेनसदा
कार्यमासुरंह्यन्यथाभवेत् ॥ याज्ञवल्क्यः ॥ देवेभ्यश्चहुतादन्नाच्छेषाद्भूतबलिंहरेत् ॥
अन्नम्भूमौश्वचाण्डालवायसेभ्यश्चनिक्षिपेत् ॥ श्वादिबलीनांपृथग्देशाद्भूतयज्ञबहि
र्भावः ॥ ब्रह्मादितीर्थाधिकारेहारीतः ॥ मार्जनार्चनबलिकर्मभोजनादिदैवेन ॥ छन्दोग
परिशिष्टे ॥ नावरार्धाबलयोभवन्तिमहामार्जारश्रवणप्रमाणात् ॥ एकत्रचेदविप्रकृष्टा
भवन्ति इतरेतरासंयुक्ताश्च ॥ अवरार्धन्यूनाः ॥ एकत्रचेत्यादिनानानास्थानेबलिदाना

सम्भवे एकस्मिन्नेवस्थानेयदाबलयोदीयन्ते ॥ तदा अविप्रकृष्टाअव्यवहिताः ॥ इतरे
तरासंयुक्ताश्चपरस्परासंयुक्ताश्च ॥ दातव्याइत्यर्थः ॥ अस्मिन्नपिपक्षेधात्रादिबलिषुद्वा
रादिकल्पनीयम् ॥ आपस्तम्बः ॥ बलीनान्तस्यतस्यदेशस्यसंस्कारोहस्तेनपरिमृ
ज्यावोक्ष्याभ्युक्ष्यपश्चात्परिषेचनम्॥तस्यतस्येत्यावृत्तेः प्रत्येकम्मार्जनादि अवोक्ष्यासि
क्त्वानुपलिप्यबलिंदत्वापरिषेचनं॥बलेरुपरिसेकः॥बलीनुक्त्वाछन्दोगपरिशिष्टे ॥ पिण्ड
वत्पश्चिमाप्रतिपत्तिः पिण्डवदप्स्वादिप्रक्षेपणम् ॥ पश्चिमाअन्तिमा ॥ यत्तुपश्चिमाप्रति
पत्तिः पितृबलिप्रतिपत्तिरितिव्याख्यानम् ॥ तदशुद्धम् ॥ सर्वबलिप्रतिपत्त्याकांक्षाया
विद्यमानत्वात्॥स्त्रीलिङ्गानुपपत्तेः॥ षष्ठीसमासेलक्षणापत्तेश्च॥तथा ॥ अमुष्मैनमइत्येवं
बलिदानंविधीयते ॥ तथा॥स्वधाकारेणनिर्वपेत्पित्र्यंबलिमतःसदा ॥ तत्रप्येकेनमस्कारैः
कुर्वतेनेतिगौतमः॥एकइतिशाखान्तराभिप्रायम्॥अतएवस्वधानमइतिवाजसनेयिगृह्ये
नमस्कारोऽपिपठितः ॥ नेतिगौतमइतिछन्दोगानांनमस्कारनिषेधः ॥तथा॥ सायम्प्रात

वैश्वदेवः कर्त्तव्योबलिकर्मच ॥ अनश्नतापिसततमन्यथाकिल्बिषीभवेत् ॥ सायमितिपु
नः पाकेसति ॥ तथाचविष्णुपुराणे ॥ पुनः पाकमुपादायसायमप्यवनीपते ॥ वैश्वदेव
निमित्तंवैपत्न्यमन्त्रम्बलिंहरेत् ॥ तत्रापिश्वपचादिभ्यस्तथैवान्नविसर्जनम् ॥ मनुः ॥
सायन्त्वन्नस्यसिद्धस्यपत्न्यमन्त्रम्बलिंहरेत् ॥ इदंपत्नीकर्तृकबलिहरणम् ॥ यजमाना
नुपस्थितौ ॥ अत्रभ्रात्रादीनामविभक्तानामपि संसृष्टानां मुख्येनैकेनैव पाकयज्ञाः कर्त्त
व्याः ॥ यदाह ॥ एकपाकेनिवसतांपितृदेवद्विजार्चनम् ॥एकम्भवेद्विभक्तानांतदेवस्याद्गृ
हेगृहे॥एकपाकेनिवसतामित्युपक्रम्यसंसृष्टानामित्यभिधानाद्विभक्तानामितिद्रव्यपार्थ
क्यपरम् ॥ देवार्चनमत्रवैश्वदेवः ॥ अत्रहोमात्प्राक्स्रग्गन्धादिनावह्निपूजनङ्कर्त्तव्यम् ॥
तदुक्तम्मार्कण्डेयपुराणे ॥ सम्पूजयेत्ततोवह्निन्दद्याच्चैवाहुतीः क्रमादिति॥ अथप्रयोगः॥
पर्युक्षितेसमिद्धेग्नौतदभावेजलेतदभावेभूमौपाकादन्नमुद्धृत्यफलमूलादिनावापञ्चाहुती
र्जुहुयात् ॥ ॐ ब्रह्मणेस्वाहा ॥ ॐ प्रजापतयेस्वाहा ॥ ॐ गृह्याभ्यःस्वाहा ॥ ॐ कश्य

पायस्वाहा ॥ ॐ अनुमतयेस्वाहा ॥ ततोहुतशेषान्नेनबलिदानम् ॥ तत्रप्रत्येकम्बलिदे
शान्करेणमार्जयित्वाजलेनाभ्युक्ष्य ॥ ॐ पर्जन्यायनमः ॥ ॐ अद्भ्योनमः ॥ ॐ पृथिव्यै
नमः ॥ इत्युदपात्रसन्निधौ ॥ ॐ धात्रेनमः ॥ ॐ विधात्रेनमः ॥ इतिद्वार्य्ययोः ॥ ॐ वाय
वेनमइतिप्रतिदिशम् ॥ ॐ प्राच्यैनमः ॥ ॐ अवाच्यैनमः ॥ ॐ प्रतीच्यैनमः ॥ ॐ उदी
च्यैनमः ॥ इत्यपिप्रतिदिशम् ॥ ॐ ब्रह्मणेनमः ॥ ॐ अन्तरिक्षायनमः ॥ ॐ सूर्य्यायन
मः ॥ इतिमध्ये ॥ ॐ विश्वेभ्योदेवेभ्योनमः ॐ विश्वेभ्योभूतेभ्योनमः ॥ ॐ उषसेनमः ॥
ॐ भूतानाम्पतयेनमः ॥ इत्युत्तरोत्तरम् ॥ ततः प्राचीनावीतीदक्षिणाभिमुखःपातित
वामजानुः पितृतीर्थेनदक्षिणस्यांदिशि ॐ पितृभ्यः स्वधानमइतिदद्यात् ॥ ततोबलिशे
षान्नलिप्तपात्रम्प्रक्षाल्ययक्ष्मैतत्तेनिर्णेजनंनमइतिवायव्यान्दिशिदद्यात् ॥ गृहद्वारादौ
बलिदानासम्भवे अग्नेःपश्चिमतश्चतुरस्त्रमण्डले धात्रादिबलिदानम् ॥ यक्ष्मबल्यनन्त
रंविष्णुपुराणे ॥ ततोऽन्यंदन्नमादायभूमिभागेशुचौपुनः ॥ दद्यादशेषभूतेभ्यःस्वेच्छया

तुसमाहितः ॥ देवामनुष्याःपशवोवयांसिसिद्धाःसयक्षोरगदैत्यसंघाः ॥ प्रेताः पिशाचा
स्तरवःसमस्तायेचान्नमिच्छन्तिमयाप्रदत्तम् ॥ पिपीलिकाःकीटपतङ्गकाद्याबुभुक्षिताः
कर्मनिबन्धबद्धाः ॥ प्रयान्तुतेतृप्तिमिदम्मयान्नंतेभ्योविसृष्टंसुखिनोभवन्तु ॥ येषांनमा
तानपितानबंधुर्नचान्यसिद्धिर्नतथान्नमस्ति ॥ तत्तृप्तयेन्नंभुविदत्तमेतत्तेषान्तुतृप्तिर्मुदिता
भवन्तु ॥ भूतानिसर्वाणितथान्नमेतदहञ्चविष्णुर्नयतोऽन्यदस्ति ॥ तस्मादहम्भूतनिका
यभूतमन्नम्प्रयच्छामिभवायतेषाम् ॥ चतुर्दशोभूतगणोयएषतत्रस्थितायेऽखिलभूतसं
घाः ॥ तृप्त्यर्थमन्नंहिमयाविसृष्टन्तेषामिदन्तेमुदिताभवन्तु ॥ इत्युच्चार्यनरोदद्यादन्नंश्र
द्धासमन्वितः ॥ भुविभूतोपकारायगृहीसर्वाश्रयोयतः ॥ श्वचाण्डालविहङ्गानांभुविदद्या
त्ततोनरः ॥ इदञ्चकाम्यबलिदानंसर्वशाखिसाधारणम्बहुभिरभिधानाच्च ॥ मनुः ॥ शुना
ञ्चपतितानाञ्चश्वपचाम्पापरोगिणाम् ॥ वायसानांकृमीणाञ्चशनकैर्निक्षिपेद्भुवि ॥ व्या
सः ॥ ऐन्द्रवारुणवायव्याःसौम्यावैनैर्ऋतास्तथा ॥ वायसाःप्रतिगृह्णन्तुभूमौपिण्डंमया

र्पितम् ॥ श्वानौद्वौश्यावशबलौवैवस्वतकुलोद्भवौ ॥ ताभ्याम्पिण्डंप्रयच्छामिस्यातामेता
वहिंसकौ ॥दत्वानेनविधानेनबलिंपश्चादुपस्पृशेत् ॥ वायसादिभ्योभूमौदत्वाब्राह्मणान्
भोजयेत् ॥ पित्रर्थबलिदानानन्तरम् ॥ वसिष्ठः ॥ श्रोत्रियायाग्रन्दत्वाब्रह्मचारिणेचान
न्तरम्पितृभ्योदद्यात् ॥ एतच्चतस्मिन्कालेश्रोत्रियब्रह्मचारिणोरुपस्थितौ ॥ नोचेत्पूर्ववा
क्याद्बल्यनन्तरमेवश्राद्धम् ॥ अथनित्यश्राद्धम् ॥ भविष्यपुराणे ॥ अहरहःक्रियतेयत्तु
तन्नित्यमितिकीर्त्त्यते ॥ विश्वेदेवविहीनंतदशक्तावुदकेनतु ॥ विश्वेदेवविहीनंविश्वेदेव
श्राद्धरहितम् ॥ मनुशंखशातातपाः ॥ दद्यादहरहःश्राद्धमन्नाद्येनोदकेनवा ॥ पयोमूलफ
लैर्वापिपितृभ्यःप्रीतिमावहन् ॥ छन्दोगपरिशिष्टे ॥ अप्येकमाशयेद्विप्रंपितृयज्ञार्थसि
द्धये ॥ इति ॥ तथा ॥ अप्युद्धृत्ययथाशक्त्याकिञ्चिदन्नंयथाविधि ॥ पितृभ्योऽथमनुष्ये
भ्योदद्यादहरहर्द्विजः ॥ पितृभ्यइदमित्युक्त्वास्वधाकारञ्चकारयेत् ॥ मनुष्येभ्योब्राह्मणे
भ्यः पितृभ्यइदमित्युक्त्वामिलितदेवताकत्वंनित्यश्राद्धमितिकेचित् ॥ मत्स्यपुराणे ॥ नित्यं

तावत्प्रवक्ष्यामि अर्घावाहनवर्जितामिति ॥ लघुहारीतः॥नित्यश्राद्धमदैवंस्यादर्घपिण्डवि
वर्जितामिति॥ब्रह्मचर्यादिनिवृत्तिराचारात् ॥अथप्रयोगः॥ अद्यनित्यश्राद्धमहङ्करिष्यइ
तिवाक्यंकृत्वागायत्रींदेवताभ्यइतित्रिर्जपित्वा ॥ पुण्डरीकाक्षस्मरणेनश्राद्धद्रव्याणिसि
क्त्वा अद्यामुकगोत्रपितरमुकशर्मन्निदमासनंतेस्वधेति प्राचीनावीती पातितवामजानुः
पितृतीर्थेन जलतिलसमेतम् ॥ द्विगुणभुग्नकुशत्रयेण पित्रे दद्यात् ॥ एवमेवपितामहप्र
पितामहमातामहप्रमातामहवृद्धप्रमातामहेभ्यआसनन्दद्यात् ॥ ततोऽपहताअसुराइ
त्यादिनातिलान्विकीर्य॥आयन्तुनइतिजपित्वा॥ ॐ अद्यामुकगोत्रेत्यादिपूर्ववत्॥एता
निगन्धपुष्पधूपदीपवस्त्राणितुभ्यंस्वधेतियथासंभवंगंधादिदद्यात् ॥ ततःपात्रमालभ्य
पृथिवीतेपात्रमित्यादिजपित्वा॥इदंविष्णुरित्यादिनांगुष्ठमन्नेसंयोज्य॥ॐअद्यामुकगोत्र
पितरमुकशर्मन्निदमन्नंसव्यंजनंसतिलंतुभ्यंस्वधेत्युत्सृजेत्॥एवम्पितामहादिभ्यःप्रत्ये
कमुत्सृजेत् ॥ ततोयथाशक्तिपवित्रान्जपेत् ॥ततस्तदन्नम्ब्राह्मणायप्रतिपादयेत्॥ब्राह्म

णोपवेशनपक्षेस्वागतप्रश्नाद्यधिकमितिप्रयोगः ॥अथभिक्षादानं॥ भिक्षादानंतुयदैवय
तिब्रह्मचारिणोरुपास्थितिस्तदैवकर्त्तव्यम् ॥नरसिंहपुराणे॥ भिक्षांचभिक्षवेदद्यात्परिव्रा
ड्ब्रह्मचारिणे ॥ कल्पितादन्नादुद्धृत्यसव्यंजनयुतादपि ॥ अकृतेवैश्वदेवेतुभिक्षौचगृह
मागते ॥ उद्धृत्यवैश्वदेवार्थंभिक्षांदत्वाविसर्जयेत् ॥ गौतमः ॥ स्वस्तिवाच्यभिक्षादानम
पूर्वं ॥ मार्कंडेयपुराणे ॥ ग्रासप्रमाणाभिक्षास्यादग्रंग्रासचतुष्टयम् ॥ अग्राच्चतुर्गुणंप्राहु
र्हंतकारंद्विजोत्तमाः॥भोजनंहंतकारंवाअग्रंभिक्षामथापिवा॥अदत्वातुनभोक्तव्यंयथावि
भवमात्मनः॥अग्रंपुष्कलसंज्ञमपि॥विष्णुपुराणे॥ दद्याच्चभिक्षात्रितयंपरिव्राड्ब्रह्मचारि
णेस्वेच्छयाचबुधोदद्याद्विभवेसत्यवारितम् ॥ पाखंडानुपक्रम्यब्रह्मपुराणे ॥ तेभ्योदेयं
गृहाद्बहिः ॥ विष्णुः ॥ भिक्षाञ्चभिक्षवेदद्यादर्चितभिक्षादानेनगोप्रदानफलमवाप्नोति॥
भिक्षुकाभावेचाग्रंगोभ्योदद्यात्॥ अग्नौवाक्षिपेत् ॥ भुक्तेऽप्यन्नेविद्यमानेभिक्षुकंनप्रत्या
चक्षीत ॥ ब्रह्मपुराणे ॥ यःपात्रपूरणींभिक्षांयतिभ्यः संप्रयच्छति ॥ विमुक्तःसर्वपापेभ्यो

नासौदुर्गतिमाप्नुयात् ॥ यमः ॥ हस्तदत्ताचयाभिक्षाव्यंजनंसलिलानिच ॥ भुक्त्वाऽशु
चितांयातिदातास्वर्गंनगच्छति ॥ देवलः ॥ सायंप्रातर्गृहद्वारंभिक्षार्थंनावघट्टयेत् ॥ भिक्षु
कवारणार्थंद्वारंनावरुंध्यादित्यर्थः ॥ अथगोग्रासः ॥ ब्रह्मपुराणे ॥ सौरभेय्यः सर्वहिताः पवि
त्राःपुण्यराशयः ॥ प्रतिगृह्णंतुमेग्रासंगावस्त्रैलोक्यमातरः ॥ दद्यादनेनमंत्रेणगवांग्रासंसदै
वहि ॥ सदैवहीत्युक्तेर्नित्याधिकारः ॥ भारते ॥ घासमुष्टिंपरगवेसान्नंदद्याच्चयः सदा ॥
अकृत्वास्वयमाहारंस्वर्गलोकंसगच्छति ॥ अकृत्वास्वयमाहारमितिश्रवणाद्भोजनात्प्राग्
ग्रासदानंनतुतत्रकालनियमः ॥ फलश्रवणाच्चात्रसकामाधिकारोपि ॥ भविष्यपुराणे ॥ तृ
णोदकेनसंयुक्तंप्रदद्याद्गवाह्निकं ॥ कपिलाशतदानस्यफलंविंद्यान्नसंशयः ॥ पंचभूते
शिवेपुण्येपवित्रेसूर्यसंभवे ॥ प्रतीक्षेमंमयादत्तंसौरभेयिनमोऽस्तुते ॥ गवाह्निकंगवायद्
ह्राभुज्यतेपंचभूतइत्यादिनागवाह्निकदानमंत्रः ॥ गोग्रासदानमंत्रस्तुसौरभेय्यइत्यादिः
प्रागुक्तः ॥ अथातिथिपूजा ॥ तत्रवसिष्ठः ॥ पितृभ्योदद्यात्ततोऽतिथीन्पूजयेत् ॥ एवंचात्र

नित्यश्राद्धानंतरमतिथिपूजाविधानात्स्मृत्यंतरेवैश्वदेवानंतरंवैश्वदेवात्प्रागागतोऽपिना
तिथिरित्येवपरं ॥ तथाचपराशरशातातपौ ॥ प्रियोवायदिवाद्वेष्योमूर्खः पण्डितएववा ॥
वैश्वदेवेतुसंप्राप्तेसोऽतिथिः स्वर्गसंक्रमः ॥ हारीतः ॥ सर्वाअस्यदेवतागृहानभ्यागच्छंति
यस्यैवंविद्वान्ब्राह्मणोगृहमभ्येतितमनभ्युत्तिष्ठतः प्राणदेवताअपक्रामान्ति ॥ अत्रबृह
स्पतिः ॥ प्रीतयेस्वागतेनाग्निरासनेनशतक्रतुः ॥ पितरः पादशौचेनभोजनेनप्रजापतिः॥
शातातपः ॥ भिक्षांवापुष्कलंवापिहन्तकारमथापिवा ॥ असंभवेसदादद्यादुदपात्रमथा
पिवा ॥ पारस्करः ॥ उद्धृत्यान्नंब्राह्मणायावनेज्यदद्यादुदकंतस्तइति ॥ एवंचातिथ्यभावे
अन्येनापिब्राह्मणेनमनुष्ययज्ञसिद्धिः ॥ अभ्यागतानुवृत्तौवसिष्ठः ॥ तंभोजयित्वोपासी
ततोगच्छन्तमासीमान्तमनुव्रजेदनुज्ञानाद्वा ॥ आपस्तम्बः ॥ यानवन्तमायानाद्यावन्ना
नुजानीयादितरमप्रतिभायामासीम्नोनिवर्त्तेत ॥ इतरंयानशून्यम् ॥ अप्रतिभायामनु
ज्ञानास्फूर्त्तौ ॥ विष्णुपुराणे ॥ अनिकेताह्यनाहारायेचसायंगृहागताः ॥ तेषांगृहस्थःसर्वे

षांप्रतिष्ठायोनिरेवचं ॥ प्रतिष्ठाआश्रयः ॥ योनिरन्नादिदानेनजीवनहेतुः ॥ तथा ॥ दिवा
तिथौतुविमुखेगतेयत्पातकन्नृणाम् ॥ तदेवाष्टगुणंपुंसांसूर्योढेविमुखेगते ॥ सूर्योढःसूर्या
स्तमयसमयः ॥ विष्णुः ॥ प्रतिश्रयंतथाशय्याम्पादाभ्यङ्गंसदीपकम् ॥ प्रत्येकदानेना
प्नोतिगोप्रदानसमम्फलम् ॥ प्रतिश्रयोवासगृहम् ॥ मनुः ॥ आसनासनशय्याभिरद्भि
र्मूलफलेनवा ॥ नास्यकश्चिद्वसेद्गेहेशक्तितोऽनर्च्चितोऽतिथिः ॥ आपस्तम्बः ॥ एकरात्रि
श्चेदतिथिंवासयेत्पार्थिवींल्लोकानभिजयति ॥ द्वितीयामान्तरिक्षान्तृतीयांदिव्यान्चतु
र्थींपारवतोलोकानपरिमितिपरिमितान्जयतीतिप्रत्यभिज्ञायते ॥ यमः ॥ नपृच्छेद्गोत्रञ्च
रणंदेशन्नामकुलंश्रुतम् ॥ अध्वनोऽभ्यागतंविप्रंभोजनेसमुपस्थितम् ॥चरणंशाखाविशे
षव्यवस्थितिः ॥ तथा ॥ देशङ्गोत्रंकुलंविद्यामन्नार्थैयोनिवेदयेत् ॥ वैवस्वतेषुधर्मेषुवान्ता
शीसनिगद्यते ॥ तथा ॥ अपिशाकंपचानस्यशिलोञ्छेनापिजीवतः॥ स्वदेशेपरदेशेवाना
तिथिर्विमनाभवेत् ॥ मनुः ॥ तृणानिभूमिरुदकंवाक्चतुर्थीचसूनृता ॥ एतान्यपिसताङ्गे

हेनोच्छिद्यन्तेकदाचन ॥ तथा॥ वैश्वदेवेतुनिर्वृत्तेयद्यन्योऽतिथिराव्रजेत् ॥ तस्याप्यन्नंय
थाशक्तिप्रदद्यान्नबलिंहरेत् ॥ वैश्वदेवहोमाद्यर्थपाकेवैश्वदेवस्यसिद्धस्येत्यादौदर्शनात्॥
निर्वृत्तेव्यतीते नबलिंहरेत्॥अतिथ्यर्थंपुनःपाकेकेवलबलिहरणनिषेधः ॥ केचिद्व्याचक्षते
वैश्वदेवहोमान्तेऽतिथ्यन्तरोपस्थितौतस्मैदत्वाबलिहरणंनकर्त्तव्यमित्यर्थः ॥ तदयुक्तम्ब
लिहरणात्पूर्वमतिथ्यन्नदानेनस्मृत्यन्तरविरोधात् ॥ अन्नाल्पत्वेबलिहरणविरोधेऽप्य
तिथयेऽन्नदानमित्यपिनव्याख्यानंयुक्तम् ॥ नबलिंहरेदित्यविशेषितश्रवणात् ॥ अतएव
बलिमपिनहरेदितिस्तुतिरितिव्याख्योपेक्ष्याअप्यर्थाध्याहारदोषाच्च ॥ पराशरशातात
पौ ॥ अचिन्तितमनाहूतंदेशकालउपस्थितम् ॥ अतिथिन्तंविजानीयान्नातिथिःपूर्वमाग
तः ॥ देशः उपस्थितंगृहेविद्याद्भार्यायत्राग्नयोपिवेति मनुविष्णुशातातपैरुक्तः कालो वैश्व
देवोत्तरः प्रागुक्तः ॥ याज्ञवल्क्यः ॥ अध्वनीनोऽतिथिर्ज्ञेयः ॥ गौतमः ॥ असमानग्रामी
णोऽतिथिरेकरात्रिकः ॥ एकरात्रिकस्तद्दिनागतः ॥ पूर्वन्तुद्वितीयदिनादावपिवासनम्फ

लार्थमुक्तम् ॥ आपस्तम्बः ॥ धर्मपुरस्कारेणान्नप्रयोजकः सोऽतिथिर्भवति॥धर्मपुरस्का
रस्तीर्थयात्रादिप्रवृत्तस्तत्रातिथिरेवसम्बध्यते ॥ अत्रप्रयोजकोभोजनार्थमटनशीलः ॥
॥ मनुः ॥ ब्राह्मणस्यत्वनतिथिर्गृहेराजन्यउच्यते ॥ वैश्यशूद्रौसखाचैवज्ञातयोगुरुरेवच॥
यदित्वतिथिधर्मेणक्षत्रियोगृहमाव्रजेत् ॥ भुक्तवत्सुतुविप्रेषु कामन्तमपिभोजयेत् ॥ वै
श्यशूद्रावपिप्राप्तौकुटुम्बेऽतिथिधर्मिणौ ॥ भोजयेत्सहभृत्यैस्तावानृशंस्यंप्रयोजनम् ॥
इतरानपिसख्यादीन्संप्रीत्यागृहमागतान् ॥ प्रकृत्यान्नंयथाशक्तिभोजयेत्सहभार्यया ॥
कुटुम्बेगृहे ॥ आनृशंस्यंदया॥प्रकृत्यपक्त्वा॥सहभार्ययासहितः ॥ बौधायनः ॥ सायंप्रा
तर्यदन्नंस्यात्तेन वैश्वदेवबलिमुपसंहृत्य ब्राह्मणक्षत्रियविट्शूद्रानभ्यागतान्यथाशक्त्या
पूजयेत् ॥ यदिबहूनांनशक्नुयात्तदाएकस्मैगुणवतेदद्याद्योवाप्रथममागतःस्यात् ॥ गौ
तमः ॥ ऋत्विक्-श्वशुरपितृव्यमातुलानामुपस्थानेमधुपर्कःसंवत्सरेपुनर्यज्ञविवाहयोर
र्वाक् राज्ञश्चश्रोत्रियस्याचार्यस्य अश्रोत्रियस्यासनोदके ॥ तथा ॥ श्रोत्रियस्यपाद्यम

र्घमन्नविशेषांश्चप्रकारयेत्॥नित्यंवासत्कारविशिष्टंमध्यतोऽन्नदानमवैधेसाधुवृत्तौ विपरी
तेतृणोदकभूमिस्वागतमन्नतः पूजाऽनत्यासश्च ॥ श्रोत्रियो वेदानामेकैकांशाखामधीत्य
श्रोत्रियोभवतीत्यापस्तम्बोक्तेः॥ नित्यंयादृशमहरहर्गृहेपच्यते ॥ मध्यतोमध्यविभागेन
ण ॥ अवैधेमूर्खेविपरीतेऽसाधुवृत्तेअनत्यासोऽनतिक्रमः॥ आपस्तम्बः॥ ब्राह्मणायान
धीयमानायासनमन्नमुदकमितिदेयंनप्रत्युपतिष्ठेताऽभिवादनायोत्तिष्ठेत ॥ अभिवाद्यश्चे
त्॥राजन्यवैश्यौचशूद्रमभ्यागतङ्कर्मसुनियुंज्यात् ॥ अथास्मैदद्यात्॥ राजन्यवैश्यौचे
तिनप्रत्युत्तिष्ठेतेत्यनुषङ्गः॥ तथा ॥ सर्वान्वैश्वदेवभागिनःकुर्वीत श्वचाण्डालेभ्योवाना
नर्हद्भ्योदद्यादित्येके॥ नानर्हद्भ्यइतिनिषेधात्तेभ्योदानमनावश्यकम् ॥ अपिकीटपतङ्गा
नांशुनाञ्चाण्डालयोनिनाम् ॥ दत्वान्नंलोकमाप्नोतिप्राजापत्यंसमाःशतमितिनन्दिपुरा
णात्॥॥ फलार्थत्वस्यैवावगमात् ॥ जाबालिः॥ अस्नाताशीमलंभुंक्तेअजपीपूयशोणि
तम् ॥ अहुत्वातुकृमिंभुंक्तेअदत्वाविड्विभोजनम् ॥ अद्यंसकेवलंभुंक्तेयःपचत्यात्मकार

णात् ॥ इन्द्रियप्रीतिजनकंवृथापाकंविवर्जयेत् ॥ शङ्खलिखितौ ॥ नभोजनार्थीपाकशा
लाम्प्रविशेत् ॥ नन्दिपुराणे ॥ यतेतब्राह्मणंपूर्वंभोक्तुमन्नंसदागृही ॥ देवलः ॥ नावृतंभो
जयेद्विप्रंस्वगृहेसतिसर्पिषि ॥ परत्रनिरयंघोरंगृहस्थःप्रतिपद्यते ॥ मिष्टमन्नंस्वयंभु
क्त्वापश्चात्कदशनंलघु ॥ ब्राह्मणंभोजयेन्मूर्खोनिरयेचिरमाविशेत् ॥ वासिष्ठः ॥ महये
च्चयथाशक्तिसर्वदासर्वभूतानि ॥ गृहस्थएवयजतेगृहस्थस्तप्यतेतपः ॥ चतुर्णामाश्रमा
णान्तुगृहस्थस्तुविशिष्यते ॥ महयेत्पूजयेत् ॥ पैठीनसिः ॥ चत्वारोह्याश्रमाः ब्रह्मचारी
गृहस्थोवानप्रस्थोभिक्षुश्चेतिसर्वेगृहस्थमूलास्तदुपजीविनः इति ॥ गृहस्थमूलागृहस्थ
स्यैवपूज्योपादानाधिकारित्वात् ॥ दक्षः ॥ देवैश्चैवमनुष्यैश्चतिर्यग्भिश्चोपजीव्यते ॥ गृ
हस्थःप्रत्यहंयस्मात्तस्माज्ज्येष्ठोगृहाश्रमी ॥ याज्ञवल्क्यः ॥ बालस्ववासिनीवृद्धगर्भि
ण्यातुरकन्यकाः ॥ सम्भोज्यातिथिभृत्यांश्चदम्पत्योःशेषभोजनम् ॥ दक्षः ॥ पञ्चमेचत
थाभागेसंविभागोयथार्हतः ॥ देवपितृमनुष्याणांकीटानाञ्चोपदिश्यते ॥ संविभागन्त

थाकृत्वागृहस्थःशेषभुग्भवेत् ॥ संविभागोविभज्यप्रतिपादनम् ॥ अथभोजनविधिः ॥
॥ तत्रबौधायनः ॥ सुप्रक्षालितपाणिपादोऽपआचम्यशुचौसंवृतेदेशेअन्नमुपसंगृह्य
कामक्रोधलोभमोहानपहत्यसर्वाभिरंगुलीभिःशब्दमकुर्वन्प्राश्नीयात् ॥ ब्रह्मपुराणे॥
आसनस्थस्तुयोदर्पात्पंक्तिमध्यउपस्पृशेत् ॥ ससर्वेषान्तुयत्पापंतद्गृण्हातिनराधमः ॥
तस्माद्बहिरुपस्पृश्यआचान्तःप्रविशेद्गृहम् ॥ तथा ॥ पात्रेष्वर्थानुरूपेषुपुत्रभृत्यानुजैःस
ह ॥ भूम्यांपात्रंप्रतिष्ठाप्यमौनेनान्नन्तुभक्षयेत् ॥ पवित्रपाणिःपुण्यञ्चलभेत्तत्राघमर्ष
णम् ॥ अघमर्षणजन्यपुण्यमितिसामानाधिकरण्यम् ॥ लभेज्जपेदित्येके ॥ तन्मतेनाघ
मर्षणमुख्यमेव ॥ विष्णुराणे ॥ विशुद्धवदनः प्रीतोभुंजीतनाविदिङ्मुखः॥विदिङ्मुखः॥
आग्नेयीनैर्ऋतीवायव्यैशान्यभिमुखः ॥ हारीतः ॥ नोदङ्मुखोनाधिशयनेआसनेअ
श्नीयात् ॥ अधिउपरि ॥ शयनेशय्यायाम् ॥ आसनेपीठादौ ॥ अन्नंकृत्वेतिशेषः ॥ वा
मनपुराणे ॥ भुंजीतनोदङ्नचदक्षिणामुखोनचप्रतीचीमभिभोजनीयम् ॥ एतेउद

ग्दक्षिणाप्रत्यङ्मुखनिषेधान्निष्कामस्य ॥ तथाचमनुः ॥ आयुष्यंप्राङ्मुखोभुंक्तेयश
स्यन्दक्षिणामुखः ॥ श्रियम्प्रत्यङ्मुखोभुंक्तऋतम्भुंक्तउदङ्मुखः ॥ श्रियम्रतमित्युभय
त्रकामयमानइतिशेषः ॥ ऋतंसत्यंयज्ञंवा ॥ दक्षिणामुखभोजनम्प्रमीतमातृविषयम्
॥ तथाचापस्तम्बः ॥ नदक्षिणामुखोभुंजीतअनायुषत्वैवैमुख्यस्यभोजनम्मातुरित्युप
दिशान्ति ॥ प्राङ्मुखोऽन्नानिभुंजीतपश्चाद्रोवाग्यतः शुचिः ॥ आर्द्रपादस्तुभुंजानःशतं
वर्षाणिजीवति ॥ पंचार्द्रःपादद्वये करद्वयेमुखेच ॥ पुनरार्द्रपादोपादानंफलार्थं ॥शङ्खः ॥च
तुष्कोणंद्विजाग्र्यस्यात्रिकोणंक्षत्रियस्यतु॥मंडलाकृतिवैश्यस्यशूद्रस्याभ्युक्षणंस्मृतं॥ ब्र
ह्मपुराणे॥चतुरस्त्रंत्रिकोणंचमंडलंचार्द्धचंद्रकं॥कर्त्तव्यमानुपूर्व्येणब्राह्मणादिषुमंडलं॥ ब्र
ह्मरुद्रेंद्र चंद्रार्कवसवोमंडलांतरात्॥निवेदितंनरैरन्नंयस्माद्गृह्णंतिनान्यथा ॥ एवंचब्रह्मादी
नांभोजनकालेबलिर्देयः॥मंडलार्थंवादमात्रमेतादितिचेत् न तस्यापिसालंबनत्वात् ॥ अ
सताप्यर्थेनस्तुतिरितिचेन्न ॥ असंभवेहितथास्यात् ॥ नचैवंवाक्यभेदःसूक्तवाक्यादवि

कल्प्यत्वात् ॥ विष्णुपुराणे ॥ प्रशस्तरत्नपाणिस्तुभुंजीतप्रयतोगृही ॥ प्रशस्तरत्नंगा
रुडादि ॥ मनुः॥ पूजयेदशनंनित्यमद्याच्चैतदकुत्सयन् ॥ दृष्ट्वाहृष्येत्प्रसीदेच्चप्रतिनंदेच्चस
र्व्वदा ॥ ब्रह्मपुराणे ॥ वामेनपाणिनापात्रंगृहीत्वाभुविसंस्थितम् ॥ तेजोऽसीतिजपन्नन्नं
प्रणमेदमृतंचतत् ॥ विष्णुपुराणे ॥ अन्नंप्रशस्तंपथ्यंचप्रोक्षितंप्रोक्षणोदकैः ॥ ब्रह्मपुरा
णे ॥ अपोशानंचगृह्णीयात्सर्वतीर्थमयंचयत् ॥ अमृतोपस्तरणमसीतिविष्णोरन्नमयस्य
च ॥ असीत्यनंतरंस्वाहाकारंकुर्वीत ॥ हस्तेनलंघयेन्नान्नंसोदकेनकदाचन ॥ तथा ॥ प्रा
णेभ्यस्त्वथपंचभ्यः स्वाहाप्रणवसंयुताः ॥ पंचाहुतीःप्रजुहुयात्प्रलयाग्निनिभेष्विति ॥
प्राणाःप्राणापानव्यानसमानोदानाअत्रैवक्रमोक्ताः ॥ स्वाहाप्रणवसंयुताःस्वाहान्ताःप्र
णवाद्याः ॐ प्राणायस्वाहा ॐ अपानायस्वाहा ॐ व्यानायस्वाहा ॐ समानायस्वा
हा ॐ उदानायस्वाहा इत्येवंरूपाः प्रलयाग्निनिभेष्वितिध्येयत्वार्थम् ॥ याज्ञवल्क्यः ॥
प्राणोव्यानस्तथापानः समानोदानएवच ॥ ॐ कारपूर्वैःस्वाहांतैःपंचदद्यात्तथाहुतीः ॥

विष्णुपुराणे॥ पंचग्रासान्महामौनंप्राणाद्याप्यायनायतत् ॥ महामौनमितिसर्वथाध्वनि
निवृत्तिरभिहिता॥प्राणापानसमानानामुदानव्यानयोस्तदाक्रमान्तरेणोक्ताः॥एताश्चा
हुतयोनदंतेनभेद्याः॥प्राणायस्वाहेत्येकयाहुत्यासर्वान्प्राणान्प्रीणातीतिसमस्तान्निगिरे
दितिहारीताभिधानात् अंगुष्ठानामिकामात्रग्राह्याअन्नेताआहुतयइतिहारीतव्याख्या
तारः॥ सर्वांगुलीभिरश्नीयादितिसामान्यविधेस्तुपंचग्रासस्यापितथैवक्षुद्रताचग्रासानां
गिलनसामर्थ्याल्लभ्यते ॥ विष्णुपुराणे॥ अज्ञाद्व्योब्रह्मचारीस्यात्पक्वान्नैर्वर्द्धतेचसः ॥ प्रा
णाग्निहोत्रविद्विप्रोदाताचस्यात्समृद्धिमान् ॥ भोजनविध्यनन्तरं बौधायनः ॥ सएवमेवा
हरहःसायंप्रातर्जुहुयादितिप्राणाहुत्यभिप्रायम्॥ तथा गृहस्थोब्रह्मचारीवायोऽनश्नंश्च
तपश्चरेत् ॥ प्राणाग्निहोत्रलोपेनअवकीर्णीभवेत्तुसः अन्यत्रप्रायश्चित्तात् ॥ प्रायश्चि
त्ततदेवविधानम्॥प्राणाग्निहोत्रमंत्रांस्तुनिरुद्धोभोजनेजपेत्॥त्रेताग्निहोत्रमंत्रान्वैद्रव्या
लाभेयथाजपेत् ॥ गृहस्थोत्राहिताग्निः ॥ अनड्वान्ब्रह्मचारीचआहिताग्निश्चतेत्रयः ॥ अ

श्नंतएवासिध्यंतिनैषांसिद्धिरनश्नतामित्यापस्तम्बवचनात् ॥ प्राणाग्निहोत्रंप्राणाहुतिः ॥
त्रेतागार्हपत्याहवनीयदक्षिणाग्निरूपमग्नित्रयम् ॥ द्रव्यालाभेऽग्निहोत्रविहितद्रव्याला
भे ॥ मनुः ॥ सायंप्रातर्द्विजातीनामशनंदेवनिर्मितम् ॥ नांतराभोजनंकुर्यादग्निहोत्रसमो
विधिः ॥ अन्तराभोजननिषेधोमूलफलादन्यत्र ॥ तथाचापस्तम्बः ॥ दिवाचनभुंजीतान्य
त्रफलमूलेभ्यइति चकारः पुनरर्थे ॥ छन्दोगपरिशिष्टे ॥ ऋषिभिर्द्विरशनमुक्तंविप्राणाम
प्रवासिनाम् ॥ सततंनित्यमहनिचतथातमास्विन्यांसार्द्धप्रहरयामान्तः ॥ अहनीतिसति
संभवेपंचमभागपरंदक्षदर्शनात् ॥ तपास्विन्यांरात्रौसार्द्धप्रहरयामांतः ॥ अर्द्धप्रहरसहि
तप्रथमप्रहरे ॥ एवंचमन्वादावपिसायंप्रातश्चैतदनुसाराद्व्याख्येयम् ॥ अत्रहारीतः ॥ न
कार्ष्णायसेनमृत्पात्रेनभिन्नेनावकीर्णे ॥ कर्ष्णायसेलोहपात्रे भिन्नेस्फुटिते अवकीर्णेशूद्र
भोजनादिनापवित्रे ॥ मनुः ॥ नभिन्नभांडेभुंजीतनभावप्रतिदूषिते ॥ पैठीनसिः ॥ ताम्रर
जतसुवर्णशंखमुक्ताफलंभिन्नमितिनदोषः ॥ अत्रविष्णुपुराणे ॥ नासंदीस्थितेपात्रे ॥ आसं

दीवेत्रादिनिर्मितमुच्चमासनम् ॥ अत्रविष्णुः ॥ नभुविपाणौलवणम् ॥ वसिष्ठः ॥ भार्य
यासहनाश्नीयादवीर्यवदपत्यंभवतीतिवाजसनेयिकेविज्ञायते ॥ ब्रह्मपुराणे ॥ ब्राह्मण्या
भार्ययासार्द्धंक्वचिद्भुंजीतचाध्वनि ॥ असवर्णस्त्रियासार्द्धंभुक्त्वापततितत्क्षणात् ॥ ब्राह्मणी
पदंसवर्णोपलक्षणं ॥ अपस्तंबः ॥ ननाविभुंजीत तथाप्रासादेकृतभूमौभुंजीत ॥ प्रासादेदा
रुबद्धतलइत्याहुः कृतभूमौमृदादिप्रक्षेपेणसंपादितभूमौनाविप्रासादेच ॥ हारीतः ॥ न
क्रुद्धोनान्यमनानाभिभाषमाणोऽश्नीयान्नशिशून्निर्भर्त्सयन्नाप्रदायप्रेक्ष्यमाणेभ्यः ॥
यमः ॥ अश्नातियोभृत्यजनस्यमध्येमिष्टान्नमेकोरसगृध्नबुद्धिः ॥ दीनैःकटाक्षैरभिवीक्ष्य
माणोऽव्यक्तंविषंहालहलंचभुंक्ते ॥ देवलः ॥ एकवस्त्रोनभुंजीतकपाटमपिधायच ॥ कपा
टमपिधायद्वारमावृत्य ॥ स्वग्रामेग्रामतोवापिसन्निकृष्टेमृतेसति ॥ नभुंजीताशनंधीमान्
धर्म्यंवैशोककारणात् ॥ गौतमः ॥ नभक्ष्यानुत्संगेभक्षयेत् नवारात्रौप्रेष्याहृतंदास्याहृतं
दुग्धादि ॥ शंखः ॥ नानियुक्तोऽग्रासनंगच्छेत् नअग्रासनस्थःप्रथममश्नीयात् ॥ नाधि

कंदद्यात् नप्रतिगृह्णीयात् मनुः ॥ नभुंजीतोद्धृतस्नेहंनातिसौहित्यमाचरेत् ॥ नातिप्रगेना
तिसायंनसायंप्रातराशितः ॥ अतिप्रगेसूर्योदयसन्निधौअतिसायंमहानिशायां ॥ नसा
यमित्यादिप्रातर्भोजनेनैवतृप्तःसायंपुनर्भोजनंनकुर्यादित्यर्थः ॥ बृहस्पतिः ॥ नस्पृशे
द्वामहस्तेनभुंजानोऽन्नंकदाचन ॥ नपादौनशिरोवस्तिंनपदाभाजनंस्पृशेत् वस्तिर्ना
भेरधोदेशः ॥ याज्ञवल्क्यः ॥ नभार्यादर्शनेऽश्नीयान्नैकवासानसंस्थितः ॥ भार्यादर्शने
भार्ययादृश्यमानः पश्यन्नितिकेचित् ॥ ब्रह्मपुराणे ॥ अप्येकपंक्त्यांनाश्नीयात्संबंधि
स्वजनैः सह ॥ कोहिजानातिकिंकस्यप्रच्छन्नंपातकंभवेत् ॥ भस्मस्तंभजलद्वारमार्गैः
पंक्तिंचभेदयेत् ॥ कोहिजानातीत्यादिनापातकसंदेहेएकपंक्त्यांनभोक्तव्यमित्युक्तम् ॥
निर्दोषत्वेतुनिश्चितेभोक्तव्यमेव ॥ भस्मस्तंभादिनाचपंक्तिभेदाभिधानेपातकिनापिसह
एकपंक्त्यांभोजनेदोषोनास्तीत्यर्थः ॥ महाभारते ॥ पानीयंपायसंसर्पिर्मधुयुक्तंमधून्य
पि ॥ निरस्यशेषमेतेषांनप्रदेयंतुकस्यचित् ॥ निरस्यत्यक्त्वातेन यदिदैवाच्छेषमनुतिष्ठ

तितदानदेयमित्यर्थः ॥ निरस्यमितिपाठेतुशेषंनधार्य्यमित्यर्थः ॥ तदाहब्रह्मपुराणे ॥ ति
लकल्कंदाधिक्षीरजलक्षौद्रघृतानिच ॥ नत्यजेदर्धजग्धानिसक्तूँश्चाथकदाचन॥क्षौद्रंमधु
अर्धजग्धानिअर्धभुक्तानि ॥ विष्णुः ॥नगोब्राह्मणोपरागेचाश्नीयात् नराजव्यसनेप्रवा
सितश्चाग्निहोत्रीयदाग्निहोत्रंहुतंमन्यतेतदाश्नीयात् यदाकृतंमन्यतेवैश्वदेवमपि पर्वणि
चयदापर्वकृतंमन्यते ॥ उपरागेअत्यंतपीडायां॥ तथाननग्नोनोत्कटोनचभिन्नासनगतः
॥ उत्कटासनगतः ॥ तथा नाकाशे ॥ आकाशोत्रहिंदोलादिरितिहलायुधनिबंधः ॥ तथा
नबहूनांप्रेक्ष्यमाणानांनैकस्मिन्बहवस्तथा शून्यालयेवन्हिगृहेदेवागारेकथंचन ॥तथा॥
शयानः प्रौढपादस्तुकृत्वाचैवावसक्थिकाम् ॥ तथा पिबेन्नांजलिनातोयं ॥ तथा नभावदु
ष्टमश्नीयात् ॥ भावदुष्टंयत्रमनःप्रसादोनभवति ॥ तथा ॥ नैकोमिष्टंनोद्धृतस्नेहंनादि
वाधानानरात्रौतिलसंवर्द्धनकोविदारवटपिप्पलशणशाकं दधिसक्तून्न ॥ दधिसक्तूनित्य
त्रापिरात्रावित्यर्थः यमः खट्वारूढोनभुंजीतनचोत्तानः कदाचन ॥ ब्रह्मपुराणे ॥ यस्तुपा

